ISSN- 2320- 5911

# प्रज्ञालोकः

(रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोध-संस्थानस्य
संस्कृतदर्शनविभागस्य peer-reviewed शोधपत्रिका)

## एकादशः अङ्कः

उपदेष्टा

स्वामी आत्मप्रियानन्दः

स्वामी जपसिद्धानन्दः

सम्पादकः

डॉ. राकेशदाशः



संस्कृतदर्शनविभागः
रामकृष्णमिशन्-विवेकानन्दशैक्षणिकशोधसंस्थानम्
वेलुडमठम्

प्रज्ञालोकः
(संस्कृतदर्शनविभागस्य वार्षिकी द्विभाषामयी विशेषज्ञसमीक्षिता शोधपत्रिका)
*Prajñāloka*
(Annual Bi-lingual **Peer-reviewd Research Journal** of the Department of Sanskrit & Philosophy)
ISSN– 2320–5911



**प्रकाशकः -** कुलसचिवः
रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोध-संस्थानस्य
वेलुडमठस्थस्य, हावडामण्डले, पश्चिमवङ्गेषु, भारतवर्षे

**Publisher :** Registrar
Ramakrishna Mission Vivekananda Educational and Research Institute (RKMVERI)
Belur Math, Howrah, West Bengal, India
E-mail : prajnaloka.rkmvu@gmail.com
website : https://sanskrit.rkmvu.ac.in/prajnaloka/



प्रकाशनवर्षम्– २०२३
Year of Publishing– 2023

मूल्यम्– ₹ १५०/–
Price– ₹ 150/–

Powered by LaTeX 2ε

Printer : Rama Art Press, 6/30, Dum Dum Road, Kolkata 30

# सूचीपत्रम्




RAMAKRISHNA MISSION VIVEKANANDA EDUCATIONAL AND RESEARCH INSTITUTE

(Formerly known and Ramakrishna Mission Vivekananda University)

(Declared by Government of India under Section 3 of UGC Act, 1956)

PO Belur Math, Dist Howrah 711202, West Bengal, India


# Foreword

ॐ वाङ्मे मनसि प्रतिष्ठिता। मनो मे वाचि प्रतिष्ठितम्। आविराविर्म एधि। वेदस्य म आणीस्थः श्रुतं मे मा प्रहासिनीरनेनाधीतनाहोरात्रान् सन्दधाम्यृतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु मामवतु वक्तारम्।

ॐ शान्तिः शान्तिः शान्तिः॥

Om. May my speech be established in the mind, and in turn let my mind be established in speech. O Self-effulgent Brahman (the Supreme Being)! Reach me through and through! May my speech and mind be capable of revealing to me the inner meaning of the Vedic mantras. Let my learning never leave me [but be a constant source of inspiration and guidance]. May I be attuned day and night to the spirit of the Holy Scriptures that I have learnt. May I be truthful in speech and in thought. May the Supreme Being (Brahman) protect me (the disciple). May Brahman protect my teacher. [I repeat,] may He protect me and protect my teacher. May He protect my teacher. Om Peace, Peace, Peace!

The present issue of our Research Journal *Prajñāloka* of the Department of Sanskrit Studies, which has since been rechristened as the Department of Sanskrit and Philosophy with enlarged scope of academic achievement, under the School of Indian Heritage, Ramakrishna Mission Vivekananda Educational and Research Institute, is now being published after some delay. This journal, as mentioned in my Foreword to an earlier issue, is a reverential attempt to worship *Surabhārati* by

our faculty of the Department of Sanskrit & Philosophy. Our hearty congratulations to the faculty members of the Department on this sustained effort and tenacious pursuit of this literary endeavour. May *Surabhārati Medhādevi Vāgdevi Sarasvatī* illumine our hearts by making them Her eternal abode and bless us with the awakening and blazoning of the Light of Wisdom, *Prajñāloka*, is the humble prayer of

Belur Math
4 July 2023

Swami Atmapriyananda
Pro-Chancellor & Secratary

# निवेदनम्

प्रज्ञालोकाख्या बुधमनोरञ्जिनी इयं पत्रिका एकादशं वर्षं समागता। एकादशी इयं सञ्चिका प्रकाश्यते सम्प्रति। अस्यां सञ्चिकायाम् एकादश संस्कृतशोधलेखान् त्रीन् च आङ्ग्लेयशोधलेखान् आहत्य चतुर्दशशोधबन्धाः प्राकाश्यम् आनीताः। लेखस्य चयने तज्ज्ञानां (peers) मतम् अनुसृतम्। अस्याः पत्रिकायाः सर्वे प्रबन्धाः प्राबन्धिकानां परिचयम् अज्ञातवद्भिः समीक्षकैः समीक्षिताः। तेषाम् उपदेशान् यथायथम् अनुसृत्य प्रबन्धानां यथामति संस्कारः च साधितः।

प्रत्यक्षप्रमाणेन उपलब्धम् अबाधितं च जगत् सत्यं भेदविशिष्टं च मन्वानाः 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिप्रतिपादितं तत्त्वं नाङ्गीकुर्युः। अथवा, तस्याः श्रुतेः अर्थम् अनवगत्य श्रुतिम् अप्रमाणं मन्येरन् अपि। तत्र इयं श्रुतिः प्रत्यक्षबाधिका उत श्रुतिप्रत्यक्षयोः विरोधः नास्ति इति समस्याम् आदाय **अद्वैतवेदान्तदिशा श्रुतिप्रत्यक्षयोर्विरोधपरिहारविमर्शः** इति शीर्षकाङ्कितं लेखम् उपस्थापयन् शोधकर्ता तीर्थङ्करः तत्त्वशुद्धिं, न्यायसुधाकरं, संक्षेपशारीरकं, भामतीं च विचार्य प्रत्येकम् आचार्याणां मतानि सम्यक् परिशील्य श्रुतिप्रत्यक्षयोः वस्तुतः विरोधः नास्ति इति सुष्ठु प्रतिपादितवान्।

मण्डनमिश्रपादाः स्वकीये ब्रह्मसिद्धिनामके ग्रन्थे आगमः प्रत्यक्षस्य बाधकः इति प्रत्यपीपदन्। अपच्छेदन्यायम् आश्रित्य तेन इदं प्रतिपादितम्। कोऽयम् अपच्छेदन्यायः? कुत्र अयं न्यायः प्रतिपादितः? काः तत्र शङ्काः, कानि च समाधानानि? एताः समस्याः अवलम्ब्य मधुसूदनसरस्वतीविरचिताम् अद्वैतसिद्धिम् अवलम्ब्य अपच्छेदन्यायस्य विशदं विचारम् उपस्थापितवान् शुभदीपदासः **अपच्छेदन्यायवैषम्यनिरासः** इति शीर्षकाङ्किते प्रबन्धे। तत्र अस्य न्यायस्य आधारभूतानि कल्पादिवचनानि यथातथानि संस्थाप्य योग्या शोधप्रवृत्तिः प्रादर्शि प्रबन्ध्रा।

सिद्धान्तकौमुदीग्रन्थः व्याकरणनिकाये मूर्धन्यभूतः विराजते। वङ्गभूमौ अस्याः टीकाद्वयं विरचितम्। तारानाथतर्कवाचस्पतिना विरचिता सरला, अपरा च मितभाषिणी शारदारञ्जनरायेण विरचिता। अस्याः द्वितीयायाः टीकायाः विमर्शात्मकं परिचयम् उपास्थापयत् डॉ.गोपीकृष्णन्-रघु-महोदयः **सिद्धान्तकौमुदीव्याख्या मितभाषिणी** इति शीर्षकाङ्किते प्रबन्धे।

भट्टनागेशः अपादानस्य स्वरूपं प्रत्यपीपदत् मञ्जूषायां, शेखरे च।

नैयायिकाः वैयाकरणाः च पञ्चम्यर्थं भिन्नया भिन्नया रीत्या व्याख्यान्ति। तानि सर्वाणि मतानि विविच्य अपादानस्य स्वरूपं स्पष्टं निरूपितवान् डॉ.नीरजकुमारभार्गवः **नागेशाभिमतापादानस्वरूपविमर्शः** इति प्रबन्धे। तत्र व्युत्पत्तिवादम् आश्रित्य न्यायमतं सुष्ठु विचारितं तथा प्राचीनवैयाकरणमतं मनाक् स्पृष्टम् इति विशेषः अस्य प्रबन्धस्य।

आधुनिके काले व्याकरणसिद्धान्तप्रतिपादनपरं ग्रन्थं 'शब्दार्थरत्नम्' रचितवान् तारानाथभट्टाचार्यः तर्कवाचस्पतिमहाभागः। ईश्वरचन्द्र-विद्यासागरस्य समकालिकः अयं परमविद्वान् सिद्धान्तकौमुद्याः 'सरला'-नाम्नीं टीकाम्, 'आशुबोध'-नामकं पृथग् बालपाठयोग्यं सूत्रात्मकं व्याकरणं तथा 'वाचस्पत्य'-नामकं महाकोशं विहाय अपि कांश्चन व्याकरणग्रन्थान् विलिखितवान्। शब्दार्थरत्ने शब्दस्य साधुत्वस्य लक्षणं विस्तरेण विवेचितम्। **शब्दार्थरत्ने शब्दसाधुत्वप्रसङ्गविचारः** इति प्रबन्धे तद्ग्रन्थस्थान् विचारान् प्राचीनमतैः सह उपमीय समुपस्थापितवान् डॉ.सुदीपमण्डलः।

नारी इति शब्दस्य निष्पत्तौ सन्ति विदुषां विप्रतिपत्तयः। उत नृशब्दात् नारी, उत वा नरशब्दात् नारी निष्पद्यते? तत्र शास्त्रोक्ताः सिद्धान्ताः प्रतिपादिताः डॉ.सुखदेवभट्टमहोदयेन **नृनरयोर्वृद्धिश्च** इति निबन्धे।

पाणिनीयव्याकरणम् अतिरिच्य अनेकानि व्याकरणानि पूर्वं पठनपाठनपरम्परायां व्यराजन्त। तत्र प्राधान्यं भजते कातन्त्रव्याकरणम्। इदं व्याकरणम् एव कलाप-कालापकादिविविधैः नामभिः प्रसिद्धम्। वङ्गप्रदेशे नैयायिकाः प्राधान्येन इदम् एव व्याकरणम् अध्यैयत इति श्रूयते। इदं व्याकरणं कौमारव्याकरणपरम्परायाम् अन्तर्भवति इति प्रसिद्धिः। अस्य व्याकरणस्य विस्तरेण परिचयम् सन्दृब्धवान् शुभङ्करदासः **प्राचीनभारतीयव्याकरणपरम्परायां कातन्त्रव्याकरणस्य वैशिष्ट्यम्** इति प्रबन्धे।

गोस्वामी इत्युपाह्वया डॉ.सुस्मिता-महाभागया **शास्त्रेषु प्रतिफलितस्य एकान्तधर्मस्य संक्षिप्तं विवेचनम्** इति शीर्षकाङ्किते प्रबन्धे महाभारतपुराणादिषु प्रतिफलितस्य वैष्णवाचारस्य ऐतिहासिकपौराणिकदृष्ट्या विस्पष्टं विवेचनम् अकरोत्। एकान्तधर्म इति नाम्नः अपि प्रामाणिकतां प्रदर्शयन्ती असौ पाञ्चरात्राद्यागमप्रोक्तान् सात्वतादिनानाविधवैष्णवधर्मान् अपि सप्रमाणं न्यरूपयत्।

**शास्त्रेषु अभिहितान्वय-अन्विताभिधानवादविमर्शः** इति शीर्षकाङ्किते

प्रबन्धे अनयोः मतयोः रेखाङ्कनद्वारा सम्यक् परिचयं सप्रमाणम् उपस्थापितवती मण्डलोपाह्वा डॉ.अनुसृता।

**न्यायनये त्त्वाप्रत्ययार्थविमर्शः** इति प्रबन्धे वासुदेवगराइः त्त्वाप्रत्ययस्य अर्थविषये जगदीशतर्कालङ्कारस्य, तत्त्वचिन्तामण्यनुयायिनां, न्यायकौस्तुभकारस्य महादेवस्य तथा सारमञ्जरीकारस्य जयकृष्णाचार्यस्य मतानि सुष्ठु समीक्ष्य सारमञ्जरीकारमतम् एव ज्यायः इति प्रतिपादितवान्।

सञ्जीविनीटीकायां विविधकोशानाम् उद्धरणानि वर्तन्ते। तादृशानि उद्धरणानि सम्यग् विचारितवान् **रघुवंशमहाकाव्ये मल्लिनाथकृतसञ्जीविनीटीकायां कोषग्रन्थानां प्रयोगविमर्शः** इति शीर्षकाङ्कित प्रबन्धे बाप्पाराजवंशी। कोशतत्त्वविषये (lexicography) उपकारं साधयन् अयं प्रबन्धः नितरां विदुषां श्लाघाभाजनं स्याद् इति मन्महे।

आङ्ग्लभाषायां त्रयः प्रबन्धाः अत्र प्रकाशिताः। तत्र प्रथमः प्रबन्धः राधाकृष्णमहोदयेन विरचितः फलितज्यौतिषस्य केरलीयपद्धतिम् अनुसृत्य। तत्र ग्रहनक्षत्रादीनां स्थितयः कथं सन्दिग्धस्थले सिद्धान्तग्रहणे सहायकाः भवेयुः इति सुष्ठु विचारितम्। द्वितीयः प्रबन्धः मनुस्मृतौ स्त्रीणां जीवनादिविषये किम् उक्तम् इत्यस्य विवरणपरः मण्डलोपाह्वया डॉ.महुयया रचितः। तृतीयः च प्रबन्धः धम्मपदम् इति बौद्धग्रन्थस्य स्वस्थसामाजिकजीवननिर्माणे कीदृशः प्रभावः स्याद् इति विषये विप्लवमण्डलेन रचितः।

पत्रिकायां वयं सन्दर्भदानार्थं पुस्तकसूच्यर्थं च विशिष्टं प्रकारम् उपयुञ्ज्महे प्रचलिताः रीतीः विहाय। यतः प्रचलिताः पाश्चात्त्याः रीतयः शास्त्रीयग्रन्थानां सन्दर्भदानाय स्पष्टम् उपयोक्तुं न शक्यते इति अनुभवसिद्धम्। सन्दर्भदानशैलीं पृथक् वयम् उपन्यस्यामः। कृपया तत्र परिशीलयन्तु सुधियः।

पत्रिकायाः प्रकाशनस्रोतसः नैयत्याय उत्तमान् शोधप्रबन्धान् prajnaloka.rkmvu@gmail.com इति वैद्युतिनपत्रसङ्केतं प्रति प्रेषयन्तु इति सम्प्रार्थ्यते।

पत्रिकायाः प्रकाशनार्थं नियतम् अस्मान् प्रोत्साहितवद्भ्यः सम्माननीयेभ्यः प्रतिकुलाधिपतिभ्यः आत्मप्रियानन्दमहाराजेभ्यः, पूज्येभ्यः कुलपतिभ्यः स्वामिसर्वोत्तमानन्दमहाराजेभ्यः, पत्रिकायाः प्रकाशकेभ्यः विश्वविद्यालयस्य माननीयकुलसचिवेभ्यः स्वामिकालेशानन्दचरणेभ्यः, संस्कृताध्ययनविभागस्य अध्यक्षेभ्यः स्वामिजपसिद्धानन्देभ्यः च कार्तज्ञ्यं विज्ञाप्यते।

विभागस्य अपरे अध्यापकाः अपि लेखानां दोषादिपरिष्कारे साहाय्यम् आचरितवन्तः कृतज्ञतावचनैः सभाज्यन्ते।

विविधसंस्थानाम् अध्यापकाः प्रबन्धानां समीक्षणकार्यं कृत्वा पत्रिकायाः गुणवत्तारक्षणे विशेषभूमिकां निरवहन्। तेषां कृते साधुवादपुरस्सरं कार्तज्ञ्यप्रसूनानि निवेदयामः।

पत्रिकायाः टङ्कनकार्ये अक्षरसंयोजनकार्ये च विशिष्टं साहाय्यम् आचरितवान् शोधच्छात्रः तुहिनमण्डलः। तस्मै कार्तज्ञ्यं ज्ञापयामः। अक्षरपरिष्कारादिकार्ये च साह्यम् आचरितवद्भ्यः अस्माकं विभागस्य शोधच्छात्रेभ्यः, मुद्रकेभ्यः, सर्वेभ्यः प्राबन्धिकेभ्यः च वयं सविनयं धन्यवादं वितरामः अस्मिन् प्रसङ्गे।

भगवतः अनुकम्पया पत्रिकायाः प्रकाशनस्रोतः अविच्छिन्नं भवत्विति सम्प्रार्थ्य विरमामः।

सम्पादकाः

# सन्दर्भशैली
## Reference Style

पत्रिकायां सन्दर्भदानाय, ग्रन्थसूच्यां च विलक्षणा शैली उपयुज्यते। सा शैली प्रचलिताभ्यः APA, MLA इत्यादिभ्यः शैलीभ्यः भिद्यते अंशतः। तस्याः शैल्याः निर्देशः अत्र क्रियते। **ग्रन्थावल्यां (Bibliography)** ग्रन्थस्य उल्लेखे इयं रीतिः अनुस्रियते–

- ❖ **ग्रन्थः** (book)– *ग्रन्थस्य नाम* (*टीकादीनां नामभिः संवलितम्*); ग्रन्थकारः; टीकाकारः; सम्पादकः; प्रकाशकः/प्रकाशनसंस्था; प्रकाशनस्थानम्; प्रकाशनवर्षम्; श्रृङ्खला; संस्करणम्; खण्डः/भागः; ISBN।
- ❖ **प्रबन्धः** (article)– *प्रबन्धस्य शीर्षकम्*; प्रबन्धकारः; *पत्रिकायाः नाम*; (ISSN); सम्पादकः; प्रकाशकः/प्रकाशनसंस्था; प्रकाशनस्थानम्; प्रकाशनवर्षम्; खण्डः/भागः।
- ❖ **शोधबन्धः** (dissertation)– *प्रबन्धस्य शीर्षकम्*; शोधकर्ता; मार्गदर्शकस्य नाम; (प्रकाशितम्/अप्रकाशितम्); संश्लिष्टसंस्था; स्थानम्; वर्षम्।
- ❖ **अन्तर्जालसूची** (website)– url of the website; सन्दर्भदर्शनस्य दिनाङ्कः (dd/mm/yyyy, समयः h:m:s)।

अत्र ग्रन्थप्रबन्धादीनां नामानि यथा ग्रन्थे वर्तन्ते तथैव लिख्यन्ते। एवं च ग्रन्थकर्तृ-सम्पादकादीनां नामानि अपि यथा मुद्रितानि तथा लिख्यन्ते, न तु पाश्चात्त्यरीत्यनुसारं नाम्नः विपर्यासः सम्पाद्यते।

एवम् एव **सन्दर्भदाने (reference)** अपि विशिष्टा रीतिः अनुस्रियते। अस्माभिः पादटिप्पणी (footnotes) एव उपयुज्यते, न तु प्रबन्धान्त्यटिप्पणी (endnotes)। पादटिप्पणीनां द्विधा व्यवस्था। प्राचीनग्रन्थानाम्, अर्वाचीनग्रन्थानां च। क्रमेण अत्र सर्वम् उल्लिख्यते।

- ❖ **वेदः, उपनिषद्, रामायणं, श्रीमद्भगवद्गीता, महाभारतं, पुराणम्** इत्यादिभ्यः उद्धरणं तथा सूत्राणाम् उद्धरणम्। वेदादिभ्यः मन्त्राणां श्लोकानां वा उद्धरणे मन्त्रस्य/श्लोकस्य पार्श्वे एव [] (Square Bracket) मध्ये ग्रन्थनाम, अध्यायः, श्लोकसङ्ख्या च लेख्यम्। उदाहरणम्–

नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद् गहनं गभीरम्॥
[ऋग्वेदसंहिता १०/१२९/१]

ॐ केनेषितं पतति प्रेषितं मनः
केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति
चक्षुः श्रोत्रं क उ देवो युनक्ति॥ [केनोपनिषत् १/१]

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानम् अधर्मस्य तदात्मानं सृजाम्यहम्॥
[श्रीमद्भगवद्गीता ४/७]

इयं सीता मम सुता सहधर्मचरी तव॥
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना।
पतिव्रता महाभागा छायेवानुगता सदा॥
[वाल्मिकीयरामायणम् ७३ /२६-२७]

- **सूत्राणाम् उद्धरणे** अपि इयम् एव व्यवस्था। यथा वृद्धिरादैच [अष्टाध्यायी १/१/१], अथ योगानुशासनम् [योगसूत्रम् १/१ ], शास्त्रयोनित्वात् [ब्रह्मसूत्रम् १/१/३] इत्यादि।
- **काव्यादीनां, शास्त्रीयप्रकरणग्रन्थानां** च विषये अपि एवं व्यवस्था। यथा–

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥
[रघुवंशम् १/१]

अनाघ्रातं पुष्पं किसलयम् अलूनं कररुहैर्
अनाविद्धं रत्नं मधु नवम् अनास्वादितरसम्।
अखण्डं पुण्यानां फलम् इव च तद् रूपम् अनघं
न जाने भोक्तारं कम् इह समुपस्थास्यति भुवि॥
[अभिज्ञानशाकुन्तलम् २/११]

शब्दस्पर्शौ रूपरसौ गन्धो भूतगुणा इमे।
एकद्वित्रिचतुःपञ्चगुणा व्योमादिषु क्रमात्॥
[पञ्चदशी २/२]

❖ यदि प्रकरणग्रन्थः गद्यात्मकः, तत्र केवलं ग्रन्थस्य नाम प्रकृतप्रसङ्गः उत प्रकरणम् **पादटिप्पण्याम्** उल्लेखनीयम्। यथा–
*अस्येयं समष्टिरखिलकारणत्वात् कारणशरीरम् आनन्दप्रचुरत्वात् कोशवद् आच्छादकत्वाच्चानन्दमयकोशः सर्वोपरमत्वात् सुषुप्तिरत एव स्थूलसूक्ष्मप्रपञ्चलयस्थानम् इति च उच्यते॥* इति पङ्क्तेः पादटिप्पणी भवति– [वेदान्तसारः; ईश्वरनिरूपणम्]

❖ एवं नाट्यस्य वचनम् उद्धृतं चेत् इयम् एव व्यवस्था अनुसर्तव्या। तत्र **रूपकस्य नाम, अङ्कः, संवादकर्तॄणां नामानि, प्रकृतसंलापस्य वक्ता च उल्लेखनीयम्।** यथा–
*तपस्विन्निति गुणवान् खल्वयम् आलापः। अपरिचयात् तु न श्लिष्यते मे मनसि।* इति पङ्क्तेः पादटिप्पणी भवति– **भासकृते स्वप्नवासवदत्ते प्रथमाङ्के काञ्चुकीययौगन्धरायणयोः संवादे यौगन्धरायणस्य वचनम्**

❖ **टीकानाम्** अथवा **अर्वाचीनग्रन्थानां** पङ्क्त्य उद्ध्रियन्ते चेत् तेषां व्यवस्था इत्थम्–

✍ यदि ग्रन्थः टीकारूपः स्यात् तर्हि मन्त्रस्य/सूत्रस्य/श्लोकस्य/मूलपङ्क्तेः वा स्थानं लेख्यम्। यथा– *न च देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्तृत्वभोक्तृत्वाद्यनर्थ उपलभ्यते।* इति पङ्क्तेः पादटिप्पणी भवति– *श्रीमद्भगवद्गीतायां १८.६६ श्लोकस्य शाङ्करभाष्यम्।*

✍ आधुनिकग्रन्थानां विषये ग्रन्थस्य नाम तथा पृष्ठसङ्ख्या लेखनीया। ग्रन्थस्य सम्पूर्ण विवरणं तु ग्रन्थसूच्यां देयम्। यथा– … the definition of the Bhāṇa from Bharata down to Viśvanātha has remained severely stereotyped. इति पङ्क्तेः पादटिप्पणी भवति– *Aspects of Sanskrit Literature*, p2

✍ यदि प्रबन्धविशेषस्य अंशः उद्ध्रियते तर्हि इत्थम् उल्लेखः। (वक्राक्षरेण) *प्रबन्धस्य शीर्षकं*; पृष्ठसंख्या। प्रबन्धस्य वर्णनं ग्रन्थसूच्यां निर्दिष्टप्रकारेण प्रदेयम्।

✍ यस्माद् ग्रन्थाद् उद्धरणं दीयते तस्य ग्रन्थस्य विवरणं ग्रन्थसूच्यां देयम्। ग्रन्थसूची जालपुटे प्रदत्तायां सूच्यात्मकसञ्चिकायाम् (excel-सञ्चिकायां) अपि प्रदातुं शक्यते।

✍ **ग्रन्थकारस्य/सम्पादकस्य/अनुवादकस्य/टीकाकारस्य नाम यथा मुद्रितं तथा एव लेख्यम्। पदव्याः पूर्वम् उल्लेखः न कर्तव्यः।** ग्रन्थकारस्य नाम यदि Sushil Kumar De इति अस्ति तर्हि **सुशीलकुमारदे** इत्येव लेखनीयम्। न तु **दे, सुशील कुमार** इति लेख्यम्। एवम् एव **जीवानन्दविद्यासागरभट्टाचार्यः, तारानाथतर्कवाचस्पतिः, गिरिधरशर्मचतुर्वेदः** इत्येवं रूपेण यथा मुद्रितपुस्तके नाम वर्तते तथा एव नाम्नः सूचना कर्तव्या। पाश्चात्त्यरीतिम् अनुसृत्य नाम्नः विकृतिः न सम्पादनीया।

✶ ✶ ✶

# अद्वैतवेदान्तदिशा श्रुतिप्रत्यक्षयोर्विरोधपरिहारविमर्शः

तीर्थङ्करदेः *

**Abstract**

[The *Śruti* preaches that the world is unreal. It further depicts that it is a reflection and projection of the *brahman*. Hence, according to *Vedānta*, the world remains real as it is percieved by the sensory organs until one realises its actual form. Now the question remains: which one should we rely upon– the sensory perception (*pratyakṣa*) or the scriptural advice (*Śruti*)? This paper throws light on this problem and shows the way the *Vedānta* reconciles this apparent dissension between *śruti* and *pratyakṣa*.]

**०. उपक्रमः**

आस्तिकदर्शनेषु वेदान्तदर्शनं प्रमुखस्थानं भजते। वेदान्तदर्शने अद्वैतवेदान्तः द्वैतवेदान्तः विशिष्टाद्वैतवेदान्तः इत्यादिविभागाः नैके सन्ति। सर्वेषु दर्शनेषु ज्ञानविचार उपलभ्यते। ज्ञानं नाम भ्रमनिवर्तकं प्रमात्मकं वस्तु। तत्प्रमाभूतं वस्तु प्रमितुं प्रमाणविचारः सर्वदार्शनिकसम्मतः सर्वत्र दरीदृश्यते। तत्राद्वैतमते षट् प्रमाणानि निरूपितानि। तानि च– प्रत्यक्षम् अनुमानम् उपमानम् आगमः अर्थापत्तिः अनुपलब्धिश्चेत्येतानि षट् प्रमाणानि। तेषु प्रत्यक्षप्रमायाः यत्करणं तत्प्रत्यक्षप्रमाणम्। शास्त्रेषु प्रत्यक्षशब्दस्य अर्थः त्रिषु अर्थेषु दरीदृश्यते। प्रत्यक्षं प्रमाणं, प्रत्यक्षं ज्ञानं, प्रत्यक्षः विषयः। आगमप्रमाणस्य अपरं नाम शब्दप्रमाणम् अथवा श्रुतिप्रमाणम्। आ सम्यक् गम्यते ज्ञायते अर्थः अनेन इति आगमो वाक्यशेष इति आगमपदस्य व्युत्पत्तिः। शब्दप्रमाणम् इति शब्दार्थः शब्दप्रमायाः करणं शब्दप्रमाणम्। तत्र कस्याः प्रमायाः करणं शब्दः इति चेत् वेदान्तसम्प्रयदायविदां मते प्रमा पञ्चविधा वर्तते। तथाहि प्रत्यक्षप्रमा अनुमितिप्रमा उपमितिप्रमा शाब्दप्रमा अर्थापत्तिप्रमा चेति। तासु प्रमासु शाब्दबोधरूपायाः प्रमायाः करणं यत् तद् एव शब्दप्रमाणम् इत्यर्थः। एवञ्च शब्दप्रमाणस्य सामान्यं लक्षणम् इत्थं वक्तुं

---

* संशोधकः, संस्कृतदर्शनविभागे, रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोध-संस्थानस्य, tirthankar1998dey@gmail.com

शक्यते– शाब्दबोधकरणत्वं शब्दप्रमाणत्वम् इति। ननु को नाम शाब्दबोधः इत्येवं जिज्ञासायां सत्याम् उच्यते– शब्दात् जन्यः बोधः एव शाब्दबोध इति। शाब्दबोधः एव शब्दान्तरेण शाब्दप्रमा, शाब्दबोधः, शाब्दी इत्युच्यते।

वेदान्तदर्शने परमं प्रमाणं श्रुतिप्रमाणम्। श्रुतिः तत्त्वावेदिका वर्तते। परन्तु नैव श्रुतिवत् प्रत्यक्षम् अपि तत्त्वावबोधकं प्रमाणम्। ब्रह्मबोधकं प्रमाणम् एव तत्त्वावबोधकं प्रमाणं तच्च श्रुतिप्रमाणम् एव। प्रत्यक्षप्रमाणेन दृश्यमानस्य प्रपञ्चस्य सत्यत्वम् एव अविवेकिनः अनुभवन्ति। घटपटादयः सर्वेऽपि प्रापञ्चिकपदार्थाः सत्यभूताः इत्येवम् अविवेकिनां मतिः। परन्तु वेदान्तशास्त्रेण सुदृढतया सुयुक्त्या च जगतः मिथ्यात्वम् एव प्रतिपादितम्। तथाहि श्रूयते–

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।
अनेन वेद्यं सच्छास्त्रम् इति वेदान्तडिण्डिमः॥ इति।

ब्रह्म सत्यं जगन्मिथ्येति अद्वैतवेदान्तसिद्धान्तः। नहि अत्र मिथ्याशब्दः अलीकार्थबोधकः। सदसद्भ्याम् अनिर्वचनीयतार्थे मिथ्याशब्दस्य शक्तिरस्ति अस्मिन् प्रकरणे इति सम्प्रदायविदां चिन्तनम्। तेन श्रुत्या जगतः मिथ्यात्वं प्रतिपादितं भवति। परन्तु घटपटादीनां सत्त्वं प्रत्यक्षेण अनुभूयमानं तत्तु सुविदितम् एव। तेन श्रुत्या प्रतिपादितस्य जगतः मिथ्यात्वं प्रत्यक्षेण नैवानुभवगोचरं प्राकृतानाम्। तस्मात् श्रुतिप्रत्यक्षयोर्विरोधः।

## १. शोधसमस्या

प्रत्यक्षप्रमाणेन दृश्यमाने प्रपञ्चे सामान्यतया अविवेकिनः सत्यत्वम् एव अनुभवन्ति। परन्तु अद्वैतश्रुतिस्तावत् श्रूयते– "नेह नानास्ति किञ्चन"[१] इति। प्रपञ्चस्य स्वरूपेण निषेधे क्रियमाणे ब्रह्मणि प्रपञ्चस्य त्रैकालिकनिषेधः[२] क्रियते। तेन अद्वैतश्रुत्या प्रपञ्चस्य सत्यत्वं निराकृतं किञ्च प्रत्यक्षप्रमाणेन प्रपञ्चे सत्यत्वं प्रतिपादितं भवति। तस्मादत्र श्रुतिप्रत्यक्षयोः विरोधः प्रतीयते। अतः प्रकृतेऽस्मिन् शोधकार्ये अयं विषयः समुद्भूतः किं श्रुतिप्रत्यक्षयोः विरोधः अस्ति आहोस्विन्नास्तीति इयम् एव शोधसमस्या।

## २. विमर्शः

अथ कथम् अद्वितीये ब्रह्मणि वेदान्तानां समन्वयः प्रत्यक्षादिविरोधाद् इति चेन्न प्रत्यक्षाद्यधिगम्यस्य प्रपञ्चस्य ब्रह्मविवर्ततया मिथ्यात्वावगमात्। ननु न श्रुतियुक्तिभिः प्रपञ्चस्य मिथ्यात्वं प्रत्याययितुं शक्यते घटः

[१] बृहदारण्यकोपनिषद् ४.४.१९
[२] ब्रह्मणि प्रपञ्चः नास्ति नासीत् न भविष्यति इत्याख्यः सः निषेधः

सन् इत्यादिघटादिसत्त्वग्राहिप्रत्यक्षादिविरोधात् इत्येवं विरोधे प्राप्ते अद्वैतवेदान्तशास्त्रस्य प्रमुखस्थाने विराजमानानां नैकेषामाचार्याणां मतानि उपस्थाप्यन्ते।

**२.१. तत्त्वशुद्धिकारमतम्**– शुक्तौ रजतज्ञानं भ्रान्त्यात्मकं तद्वत्सति अप्यखिलप्रपञ्चस्य भ्रान्त्या अवभासो भवति इत्यतः विरोधो नास्ति। न प्रत्यक्षं घटपटादि तत्सत्त्वं वा गृह्णाति, किन्तु अधिष्ठानत्वेन घटाद्यनुगतं सन्मात्रम्। तथा सति 'सद्' 'सद्' इत्येव प्रत्यक्षं स्यात् न तु घटः सन् पटः सन् इत्यादि प्रत्यक्षं स्यादिति चेन्न यथा भ्रमात्मकज्ञाने इदमंशस्याधिष्ठानस्य प्रत्यक्षेण रजतांशस्य भ्रान्त्या प्रतिभासः तथा इति मन्तव्यम्।

ननु शुक्तौ रजतबाधदर्शने अपि घटादिबाधादर्शनात् तथाभ्युपगम एव निर्मूल इति चेन्न घटेतरपदार्थानां देशकालव्यवहितत्वात् तेषां प्रत्यक्षायोग्यत्वस्य सत्त्वे अपि स्वेतरप्रतियोगिभेदस्य अशक्यत्वाच्च स्वेतरप्रतियोगिनः अपि तु स्वेतरप्रतियोगिकभेदस्य च मिथ्यात्वप्रसङ्गः। स्वेतरपदार्थाः सर्वे इन्द्रिययोग्याः वा घटभिन्नाः यावन्तः पदार्थाः प्रपञ्चे सन्ति, ते सर्वे अपि किम् इन्द्रियप्रत्यक्षयोग्याः वा, तेषाम् इन्द्रियप्रत्यक्षायोग्यत्वे तत्प्रतियोगिकभेदः कथं प्रत्यक्षयोग्यो भवितुम् अर्हति। प्रतियोगिनः प्रत्यक्षायोग्यतायां तत्प्रतियोगिकभेदोऽपि प्रत्यक्षायोग्यो भवति। एवञ्च स्वेतरपदार्थः यदा प्रत्यक्षायोग्यो भवति तदा स्वेतरभिन्नतया प्रतीयमानो घटोऽपि प्रत्यक्षायोग्यो भवति। अतः घटः प्रत्यक्षीभवितुम् एव न शक्नोति।

ननु देशकालव्यवहितानां स्वेतरपदार्थानां प्रत्यक्षायोग्यत्वात् स्मृतिरूपत्वं भवतु। अर्थात् स्मृतिरूपत्वम् उपस्थितौ देशकालविघातकं न भवति कुतः देशान्तरे कालान्तरे पुरुषेण स्मर्तुं शक्यते द्रष्टुं न शक्यते इति चेन्न स्वेतरप्रतियोगिनः तद्भेदवैशिष्ट्यस्य च संस्काराभावात् स्मृत्यनुपपत्तिः। अत्र एतद्घटानुयोगिकतत्तत्पदार्थप्रतियोगिकभेदवैशिष्ट्यम् अपेक्षितम् इत्यतः तादृशवैशिष्ट्यानुभवः नास्तीति कृत्वा स्मृत्या उपस्थातुं न शक्यते।

ननु 'कनकाचलो भेदप्रतियोगि वस्तुत्वात्' इत्यनुमानेनापि स्वेतरभेदे वैशिष्ट्यम् इति प्रतिष्ठापयितुं शक्यते इति चेन्न। यतो हि भेदप्रतियोगिसाध्ये भेदज्ञानमपेक्षते। भेदज्ञानं विना भेदप्रतियोगिसाध्यं कथं सिद्ध्यति। प्रकृतानुमानेन भेदः एव साध्यते यदेव साध्यते तद् एवानुमाने साध्यतया प्रदर्श्यते इत्यतः आत्माश्रयदोषः। अतः स्वेतरपदार्थानां प्रत्यक्षायोग्यत्वात् तद्भेदवैशिष्ट्यम् अपि प्रत्यक्षयोग्यं नास्ति। तस्मात् घटस्य अधिष्ठानतया

यत्सन्मात्रमवभासते अधिष्ठानभूतं ब्रह्मचैतन्यं भासते तद् एव सन् घटः इत्यत्र प्रत्यक्षेण गृह्यते घटस्तु तत्रारोप्यते भ्रमस्थलमिव। एवञ्च सर्वं ज्ञानं भ्रमात्मकम्। अतः ब्रह्मभिन्नस्य प्रपञ्चस्य यन्मिथ्यात्वं[३] प्रतिपादयति अद्वैतं तत्प्रतिपादनानुकूलम् एव प्रत्यक्षप्रमाणम् इति कृत्वा प्रत्यक्षप्रमाणेन अद्वैतश्रुतेः विरोधो नास्ति।

२.२. **न्यायसुधाकारमतम्**– घटादेरैन्द्रियकत्वेऽपि 'सन् घटः' इत्यादौ सत्त्वं घटीयं नास्ति अपि तु तत्सत्त्वमधिष्ठानभूतस्य ब्रह्मणः। एवञ्च प्रपञ्चस्य सत्यत्वाङ्गीकारे खलु मिथ्यात्वस्य बाधः इति प्रपञ्चस्य सत्यत्वाङ्गीकारस्यावश्यकता नास्ति। तस्मान्मिथ्यात्वविरोधः प्रत्यक्षस्य नास्ति।

ननु सन् घटः इति प्रतीतौ सत्त्वं घटगतं नास्ति ब्रह्मगतम् एव तद्वत् नीलो घटः इति प्रतीतौ भासमानं नैल्यं घटीयं नास्ति परन्तु तन्नैल्यं ब्रह्मगतम् इति चेन्न। श्रुतौ सद्वस्तु जगदुपादानत्वेन प्रतिपादितं तत्र नीलवस्तुनः जगदुपादानत्वासम्भवात् तत्र सत्ता तु ब्रह्मगता नैल्यं तु घटस्यैव। "अरूपमव्ययम्" इति श्रुतौ प्रतिपादनदर्शनात् रूपादिकं घटादौ कल्पनीयम्।

२.३. **संक्षेपशारीरकाचार्याणां मतम्**– घटीयं सत्त्वं प्रत्यक्षं गृह्णातु। तथापि प्रत्यक्षेणाद्वैतश्रुतिबाधः नास्ति, ननु प्रपञ्चस्य सत्त्वं प्रत्यक्षेण गृह्यते तन्मिथ्यात्वद्वारा खलु वेदान्तिनः अद्वितीयत्वं साधयन्ति ब्रह्मणः। विरुद्धं खलु इत्युक्तं प्रत्यक्षादीनि सर्वाणि प्रमाणानि प्रत्यक्षादिप्रमाणेषु तत्त्वावेदकत्वाभावात् प्रत्यक्षादीनि न प्रमाणानि। अज्ञानेनाच्छादनात् अज्ञानोपहितत्वात् अज्ञातं ब्रह्म तद्ब्रह्म यद्वाक्यं बोधयति प्रत्यक्षं वा बोधयेत् अनुमानं वा बोधयेत् तद् एव तत्त्वावेदकत्वात् प्रमाणम्[४] इतरत्र प्रमाणव्यवहारः औपचारिकः। ब्रह्मबोधकं प्रमाणम् एव तत्त्वावबोधकं प्रमाणम्। तत्त्ववेदिकायाः अद्वैतश्रुतेः अतत्त्वावेदकप्रमाणेन सिद्धः प्रपञ्चः विरुद्धः न भवति। अतः प्रत्यक्षादिप्रमाणैः घटगतसत्त्वम् एव गृह्यतां परन्तु तत्सत्त्वम् अतत्वभूतम् इति कारणात् तेन प्रपञ्चमिथ्यात्वस्य विरोधः नास्ति।

२.४. **केषाञ्चन दार्शनिकानां मतम्**– सत्त्वं घटीयं सर्वाणि प्रमाणानि तत्त्वावेदकानि भवन्तु घटोऽपि प्रत्यक्षो भवतु तथापि प्रत्यक्षेण मिथ्यात्वश्रुतेः विरोधः नास्ति। तत्र प्रत्यक्षेण घटे सत्त्वं गृह्यते, तत्किं रूपमित्युक्ते

---

३ त्रिकालाबाध्यत्वविलक्षणत्वे सति क्वचिद् अप्युपाधौ सत्त्वेन प्रतीयमानत्वम्

४ अज्ञातबोधकं प्रमाणम्

सत्तारूपं तत्तद्देशकालसम्बन्धरूपं, नास्ति घटः इत्यादौ घटस्वरूपमात्रं वा भवितुम् अर्हति इति त्रितयस्य मिथ्यात्वेन सह विरोधो नास्ति। यतो हि घटस्य सत्तारूपजातिं देशकालसम्बन्धं, कम्बुग्रीवादिमत्त्वम् अपि घटस्य मिथ्यात्ववादी अङ्गीकरोति एव। अतः मिथ्यात्ववादिना सह विरोधोऽपि असम्भवः।

अन्ये केचन ब्रुवन्ति। प्रत्यक्षेण अबाध्यरूपं सत्यं गृह्यते तथापि प्रत्यक्षेण मिथ्यात्वश्रुतेः विरोधो नास्ति। "प्राणा वै सत्यं तेषाम् एष सत्यम्" [बृहदारण्यकोपनिषद् २.१.२०] इत्यादिश्रुतौ इन्द्रियजन्यप्रत्यक्षेणाबाध्यत्वरूपसत्यत्वे प्रपञ्चे गृहीतेऽपि ततोऽपि उत्कृष्टाबाध्यत्वापेक्षया मिथ्यात्वम् अपि भवितुम् अर्हति इति कृत्वा विरोधो नास्ति।

**२.५. भामतीकारमतम्** – पूर्वपक्षानुसारेण प्रत्यक्षस्य श्रुत्यपेक्षया प्राबल्यम्

★ आत्मविषयकज्ञानम् आदौ प्रत्यक्षेण ज्ञायते। अनन्तरम् आगमेन तद् अवगम्यते। ज्येष्ठस्य प्राबल्यं कनिष्ठस्य दौर्बल्यं वर्तते। उपक्रमन्यायः पूर्वमीमांसकानाम्। तस्य न्यायस्य तात्पर्यम् उपक्रमस्य प्राबल्यम् उपसंहारस्थस्य च प्राबल्यं नास्ति। प्रत्यक्षम् आदौ प्रवर्तते अतः प्रत्यक्षं प्रबलमागमः अनन्तरं प्रवर्तते। अतः आगमः दुर्बलः। अतः उपक्रमन्यायेन प्रत्यक्षं श्रुत्यपेक्षया प्रबलम् इत्येवं पूर्वपक्षः।

★ प्रत्यक्षम् उपजीव्यत्वेन प्रबलं वर्तते। आगमम् अवगन्तुं पदज्ञानम् अपेक्षितं तच्च प्रत्यक्षेण भवति। तर्हि प्रत्यक्षज्ञानम् उपजीव्य श्रुतिः प्रवर्तते। प्रत्यक्षम् अनुपजीव्यागमः न प्रवर्तते। आगमः उपजीवकः। तेन प्रत्यक्षम् उपजीव्यत्वेन ज्येष्ठप्रमाणम्। तेन ज्येष्ठप्रत्यक्षप्रमाणविरोधे सति आगमस्याप्रामाण्यं भवतु किन्तु आगमस्यात्यन्तिकाप्रामाण्यं वक्तुं न शक्यते, तेनागमस्य उपचरितार्थत्वं वा भवतु इति पूर्वपक्षिणाम् आशयः।

**३. सिद्धान्तानुसारेण प्रत्यक्षस्य प्राबल्यखण्डनम्**

★ प्रत्यक्षे दोषशङ्काकलङ्कितत्वम् अस्ति। पौरुषेयाः दोषाः सर्वेऽपि प्रत्यक्षे सम्भवन्ति। परन्तु श्रुतेः अपौरुषेयत्वात् दोषशङ्काकलङ्कितत्वं श्रुतौ नास्ति। तेन प्रत्यक्षात् श्रुतिः प्रबला।

★ भ्रमं प्रति असाधारणं कारणं भवति दोषः। इदानीम् आगमः निर्दुष्टः वर्तते, तर्हि तत्र कोऽपि दोषो नास्ति, किञ्च सः बोधं जनयति। तर्हि निर्दुष्टागमेन यो बोधो जायते तदवश्यं प्रमात्मको भवति इति वयम् आगमस्य स्वतः प्रामाण्यं वर्तते इति हेतोः आगमः प्रत्यक्षात् बलवान् इति वक्तुं शक्नुमः।

★ पूर्वं पूर्वपक्षिणाक्षिप्तम् उपजीव्यत्वेन प्रत्यक्षं बलवदिति। तदुत्तरम् आह भामतीकारः– आगमजन्यज्ञानस्य प्रमात्वं भवेत् तदर्थं प्रत्यक्षप्रमाणस्यापेक्षा नास्ति। आगमेन बोधः जनयितव्यश्चेत् कदाचित् प्रत्यक्षप्रमाणापेक्षा स्यात्। किन्तु आगमजन्यबोधस्य प्रमात्वम् अपेक्षितं चेत् तत्रापेक्षा प्रत्यक्षप्रमाणस्य नास्ति। उत्पत्तौ प्रत्यक्षप्रमाणम् अपेक्षितम्। प्रमितत्वे प्रामाण्ये प्रत्यक्षस्यापेक्षा नास्ति। परन्तु पदज्ञानोत्पत्तौ प्रत्यक्षापेक्षास्त्येव।

ननु प्रत्यक्षम् उपजीव्यागमो प्रवर्ततेऽनन्तरं "नेह नानास्ति किञ्चन" इत्यादिश्रुत्या स्वरूपबाधे प्रत्यक्षबाधे सति उपजीव्यविरोध इति चेन्न। श्रुतिप्रत्यक्षयोर्नैव विरोधः। यतो हि श्रुतिः प्रत्यक्षस्यातात्त्विकांशम् आश्रित्य प्रवर्तते बाधते च तात्त्विकांशम्। घटपटादीनां व्यावहारिकत्वं न बाध्यते, तेषां पारमार्थिकत्वं बाध्यतेऽतः श्रुतिप्रत्यक्षयोर्नैव विरोधः आपादयितुं शक्यः। यदाश्रित्य श्रुतिः प्रवृत्ता तन्न बाधते। तेन तयोर्न विरोधः उपजीव्यविरोधोऽपि अशक्यश्च।

★ ननु प्रत्यक्षप्रमाणेन अतात्त्विकज्ञानेन तात्त्विकज्ञानं नैव उत्पद्यते इति चेन्न। यथा नागः नगः वर्णारोपितांशेन सत्यं ज्ञानं तु भवति, यथा वर्णेषु भिन्नभिन्नाः ह्रस्वदीर्घादीनामन्यधर्मादीनाम् आरोपितत्वेऽपि सत्यं ज्ञानम् उत्पद्यते। आरोपस्तु मिथ्यैव। पुनः स्वप्नः स्वयं मिथ्या तथापि मिथ्याभूतस्वप्नेन जायमानाः अनुभवाः सत्यत्वेन प्रतीतिविषयाः भवन्ति। तथा च मिथ्याभूतज्ञानेनापि सत्यज्ञानं भवितुम् अर्हति। तथा च श्रुतिप्रत्यक्षयोर्नैव विरोधः।

★ प्रत्यक्षस्य प्राबल्ये हेतुः ज्येष्ठत्वं तन्नेति सिद्धान्तिना खण्डितम्। ज्येष्ठत्वं प्राबल्ये नापि तु दौर्बल्ये हेतुः अस्ति। तदर्थम् एकः न्यायोऽस्ति 'अपच्छेदन्यायः'। पूर्वपरयोः विरोधे सति परस्य प्राबल्यम्। ज्येष्ठत्वं बाधकत्वे हेतुः, ज्येष्ठं प्रबलं भवत्यतः दुर्बलस्य बाधं करोति ज्येष्ठत्वं बाधकं कनिष्ठत्वं बाध्यं भवति पूर्वपक्षिनये।

परन्तु सिद्धान्ते ज्येष्ठत्वं बाध्यत्वे हेतुः वक्तव्यः। अतः सिद्धान्तिना उच्यते ज्येष्ठत्वं बाध्यम्। तत्र सिद्धान्तिना दृष्टान्तः प्रदीयते- रजतज्ञानं ज्येष्ठं प्रथमम् उत्पद्यते, नेदं रजतम् अपि तु इयं शुक्तिः इति कनिष्ठम्। तर्हि शुक्तिज्ञानेन कनीयसा रजतबाधो दृश्यते। तेन यत्परं ज्ञानम् उत्पद्यते तद्बोधकं यच्च पूर्वजातं तच्च बाध्यं भवति। तेन कनिष्ठप्रमाणेन इयं शुक्तिरिति ज्ञानेन ज्येष्ठम् इदं रजतम् इति प्रथमम् उत्पन्नं ज्ञानं बाध्यते। तस्मात् कनिष्ठत्वं प्राबल्ये ज्येष्ठत्वं दौर्बल्ये च हेतुः इति सिद्धान्तिना स्पष्टीकृतम्।

★ “पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्” [५] इति। पूर्वपरयोः प्राबल्यदौर्बल्यविचारे पूर्वस्य दौर्बल्ये परस्य प्राबल्यं भवति। इदम् एव शास्त्रेषु “अपच्छेदन्यायः” इति प्रसिद्धम्। अत्र आक्षेपस्स्यात् उपक्रमन्यायेन पूर्वं यद् वर्तते तस्य प्राबल्यम्। प्रथमं यत् प्रवर्तितं तस्य प्राबल्यम् इति उपक्रमन्यायः। “अपच्छेदन्यायः” इत्यत्र परस्य प्राबल्यं पूर्वस्य दौर्बल्यम् इति। तेनानयोर्द्वयोः परस्परविरोधः। तेनोपक्रमन्यायस्य सञ्चारः क्रियते चेत् प्रत्यक्षस्य श्रुतेः प्राबल्यं भवति, अपछेदन्यायस्य सञ्चारः क्रियते चेत् प्रत्यक्षात् श्रुतेः प्राबल्यं भवति। अतः पूर्वोक्तयोः द्वयोः न्याययोः विरोधे सति मीमांसकैः कश्चन विभागः कृतो वर्तते, कुत्र कस्य न्यायस्य सञ्चारः कर्तव्यः इति विभागः। तथा च कुमारिलभट्टपादैरुक्ता कारिका–

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥

यत्र परस्परसापेक्षत्वं वर्तते तत्रोपक्रमन्यायस्य सञ्चारः कर्तव्यः। यत्र परस्परनिरपेक्षत्वं तत्र परस्य प्राबल्यम्– “अपच्छेदन्यायस्य प्रवृत्तिः” अतः अनयोः द्वयोः विरोधः नास्ति। द्वयोः न्याययोः क्षेत्रं भिन्नं भिन्नं वर्तते। तेन श्रुतिप्रत्यक्षयोः विरोधः असम्भवः।

**४. शोधनिष्कर्षः**

क) प्रपञ्चः शशशृङ्गतुल्यः असत्पदार्थः इति न। किन्तु प्रपञ्चस्य या प्रतीतिः सा भ्रान्ता एव। घटस्य अधिष्ठानतया यत्सन्मात्रमवभासते अधिष्ठानभूतं ब्रह्मचैतन्यं भासते तद् एव सन् घटः इत्यत्र प्रत्यक्षेण गृह्यते घटस्तु तत्रारोप्यते भ्रमस्थलमिव। एवञ्च सर्वं ज्ञानं भ्रमात्मकम् इत्येवं तत्त्वशुद्धिकाराणां सिद्धान्तः। अनेन सिद्धान्तेन श्रुतिप्रत्यक्षयोरविरोधः अत्यन्तं स्पष्ट एव। अन्येभ्यः मतेभ्यः तत्त्वशुद्धिकाराणामिदम् एव मतवैशिष्ट्यं श्रुतिप्रत्यक्षयोरविरोधप्रतिपादने– ते स्वयुक्त्या कनकाचलः इत्याख्यमनुमानं खण्डितवन्तः आत्माश्रयदोषावलम्बनेन। किञ्च स्वेतरपदार्थस्य अप्रत्यक्षत्वे तत्प्रतियोगिकभेदस्यापि अप्रत्यक्षत्वम् एव इत्येवं विचारं प्रस्तुतवन्तः इमे तत्त्वशुद्धिकाराः। एतत् सर्वम् एव अन्येभ्यः आचार्यमतेभ्यः मतवैलक्षण्यं परिलक्ष्यते।

ख) न्यायसुधाकाराणाम् अन्येभ्यः आचार्यमतेभ्यः इदम् एव मतवैलक्षण्यं वर्तते श्रुतिप्रत्यक्षयोरविरोधप्रतिपादने– ते ब्रुवन्ति प्रत्यक्षेण दृश्यमानस्य

[५] पारमर्षसूत्रं ६.५.५४

प्रपञ्चस्य सत्यत्वं यदा वयं स्वीकुर्मः तदा प्रपञ्चे श्रुत्या मिथ्यात्वमापादयितुं न शक्यते श्रुतिप्रत्यक्षयोर्विरोधाद्। अतः प्रपञ्चे सत्यत्वाङ्गीकाराभावे तु मिथ्यात्वविरोधः प्रत्यक्षः इति नायाति। एतां युक्तिम् अन्ये आचार्याः स्ववचोभिः नैव ईदृग्तया प्रतिपादितवन्तः एतत् एव वैलक्षण्यं वर्तते अन्याचार्येभ्यः। किञ्च सन् घटः इत्यादिस्थले सत्त्वं घटीयं नापि तु तत्सत्त्वमधिष्ठानगतस्य ब्रह्मणः इत्येतन्मतं यत् न्यायसुधाकाराणाम् अस्ति तत् तु तत्त्वशुद्धिकारेण सह साम्यं प्राप्नोति।

ग) संक्षेपशारीरकाचार्याणाम् अन्येभ्यः आचार्यमतेभ्यः इदम् एव वैलक्षण्यं वर्तते श्रुतिप्रत्यक्षयोरविरोधप्रतिपादने– प्रत्यक्षेण गृह्यमानेषु घटपटादिष्वनुगतं यत्सत्त्वं तत् तात्त्विकम् इति गृहीते सत्येव प्रपञ्चमिथ्यात्वस्य विरोधस्सम्भवति। परन्तु प्रत्यक्षेण गृह्यमानेषु घटपटादिष्वनुगतं यत्सत्त्वं तदतात्त्विकम् अतत्वभूतम् इत्येतन्मतमन्यैः आचार्यैः शब्दशः नैव इत्थं वर्णितम्। एतद् एव वैषम्यम् अस्ति प्रक्रियायामन्याचार्यप्रतिपादितप्रक्रियाभ्यः।

घ) भामतीकाराणाम् अन्येभ्यः आचार्यमतेभ्यः इदम् एव वैलक्षण्यं वर्तते श्रुतिप्रत्यक्षयोरविरोधप्रतिपादने– श्रुतिः प्रत्यक्षम् उपजीव्य प्रवर्तते। प्रत्यक्षम् उपजीव्यागमो प्रवर्ततेऽनन्तरं “नेह नानास्ति किञ्चन” इत्यादिश्रुत्या प्रपञ्चस्य स्वरूपनिषेधे सति उपजीव्यविरोध इति चेन्न। श्रुतिप्रत्यक्षयोर्नैव विरोधः। यतो हि श्रुतिः प्रत्यक्षस्यातात्त्विकांशमाश्रित्य प्रवर्तते बाधते च तात्त्विकांशम्। घटपटादीनां व्यवहारिकत्वं न बाधते, तेषां घटपटादीनां पारमार्थिकत्वं बाधतेऽतः श्रुतिप्रत्यक्षयोर्नैव विरोधः आपादयितुं शक्यः। उपक्रमन्यायः अपच्छेदन्यायः इत्यनयोः द्वयोः न्याययोः आधारेणापि श्रुतिप्रत्यक्षयोर्विरोधः आपादयितुमशक्यः। यतो हि तयोः क्षेत्रं भिन्नं भिन्नं वर्तते। उपजीव्यविरोधपरिहारः, उपक्रमादिन्यायप्रतिपादनमित्येतद्द्वयं स्वयुक्तिभिः प्रतिष्ठापितम् एतद् एव अन्याचार्यप्रतिपादितप्रक्रियाभ्यः मतवैलक्षण्यं वीक्ष्यते।

## ५. उपसंहारः

तत्त्वशुद्धिकाराणां सूक्ष्मयुक्तिभिः श्रुतिप्रत्यक्षयोरविरोधस्तु स्पष्टः एव। न्यायसुधाकाराणां तत्त्वशुद्धिकाराणां श्रुतिप्रत्यक्षयोरविरोधप्रतिपादन-प्रक्रियायाम् ईषत्साम्यं दृश्यते किञ्च ताभ्यां मताभ्यां श्रुतिप्रत्यक्षयोः अविरोधः एव आयाति। प्रत्यक्षेण गृह्यमानेषु घटपटादिषु अनुगतं यत्सत्त्वं तदतात्त्विकम् अतत्त्वभूतमित्येवं यत्प्रतिपादितं तत्प्रतिपादयता

संक्षेपशारीरकाचार्येण श्रुतिप्रत्यक्षयोर्विरोधाभाव एव स्पष्टीकृतः। अन्ते उपक्रमादिन्यायोपजीव्यविरोधपरिहारेण स्पष्टीकृतवता भामतीकारेण श्रुतिप्रत्यक्षयोरविरोध एव प्रतिष्ठापितः इति शम्।

✶ ✶ ✶

## Bibliography

1. *Brahmasūtraśāṅkarabhāṣyam*; Śaṅkarācārya; Ācārya Jagadīśa Śāstrī (ed.); Motilal Banarasidass; Delhi; 2018
2. *Bālavodhinī*; Yogendranātha Bāgaci; Śītāṃśuśekhara Bāgaci (ed.); Ratna Publications; Delhi; 1985
3. *Siddhāntaleśasaṅgrahaḥ (Kṛṣṇālaṅkāravyākhyayā-samalaṅkṛtaḥ)*; Appayadīkṣita; Bhāūśāstrī Vajhe (eds.); Rashtriya Sanskrit Sansthan; New Delhi; 2006

✳ ✳ ✳

# अपच्छेदन्यायवैषम्यनिरासः

**शुभदीपदासः** *

**Abstract**

[Both *Maṇḍanamiśra* and *Vacaspatimiśra* quote *'apacchedanyāya'* to prove that *āgama* (scriptural knowledge) is admissible over *pratykṣa* (sensory perception). But *Vyāsatīrtha*, in his *'Nyāyāmṛta'*, opines that *'apacchedanyāya'* should not be applied to prove the aforementioned point. Later, *Madhusūdanasarasvatī* refutes *Vyāsatīrtha* in his *'Advaitasiddhi'*. This paper aims to clarify the *'apacchedanyāya'* and show whether it is applicable to prove the admissibility of *āgama* over *pratykṣa*.]

## ०. भूमिका

आचार्यमण्डनमिश्राः स्वकीये ब्रह्मसिद्धिग्रन्थे मीमांसाशास्त्रप्रसिद्धम् अपच्छेदन्यायम् आश्रित्य आगमस्य प्रत्यक्षबाधकत्वम् आहुः। तद् अनु तान् अनुसरन्तः वाचस्पतिमिश्राः अपि भामत्यामध्यासभाष्यव्याख्यानावसरे पूर्वभाविप्रत्यक्षस्य पश्चाद्भाव्यागमेन बाधो भवतीति न्यरुरूपन्त। परन्तु न्यायामृतकारैर्व्यासतीर्थाचार्यैः स्वग्रन्थे दृष्टान्तेनापच्छेदन्यायेन सह दार्ष्टान्तिकस्य आगमप्राबल्यविचारस्य वैषम्यम् अस्तीत्यतः तम् आदाय प्रत्यक्षस्य आगमबाध्यत्वं वक्तुं न शक्यत इति प्रत्यपादि। अतस्तन्मतनिरासाय मधुसूदनसरस्वतीस्वामिभिः अद्वैतसिद्धौ अपच्छेदन्यायवैषम्यभङ्गप्रकरणे आपाततः प्रतीयमानं तद् दृष्टान्तदार्ष्टान्तिकयोः वैषम्यं निराकुर्वद्भिः अपच्छेदन्यायावष्टम्भेनैव प्रत्यक्षात् आगमस्य प्राबल्यं प्रादर्शि। [१] प्रस्तुतेऽस्मिन् शोधनिबन्धे स एव विचारः विस्तारेण प्रस्तूयते।

## १. अपच्छेदन्यायः

कोऽयम् अपच्छेदन्यायः इति ज्ञातव्यश्चेत् प्रथमं "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" [मीमांसासूत्रम्– ६.५.५४] इति जैमिनीयसूत्रस्यार्थः सुष्ठु विज्ञेयः। तथाहि सूत्रस्यास्यार्थः– निमित्तयोः पौर्वापर्ये सति पूर्वस्य नैमित्तिकस्य

---

* संशोधकः, संस्कृतदर्शनविभागे, रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोध-संस्थानस्य, subhadeep.das.vedvid@gmail.com

१ अपच्छेदन्यायवैषम्यभङ्गप्रकरणे

दौर्बल्यम् उत्तरस्य निरपेक्षस्य तद्बाधकतया उदितत्वात् पूर्वोदयकाले उत्तरस्याप्राप्तत्वेन पूर्वेण बाध्यत्वायोगाच्च इति। सूत्रे प्रकृतिवत् इति दृष्टान्तः प्रदत्तः। तेन "प्रकृतिवत् विकृतिः कर्तव्या"[२] इत्यतिदेशवाक्यस्य ग्रहणं कर्तव्यम्। तथाहि– दर्शपूर्णमासयागः प्रकृतिः, प्रयाजाः तस्य विकृतयः। अत्रातिदेशवाक्यबलेन प्रयाजेषु या पञ्चत्वसंख्या प्रथमतः प्राप्ता सा "नव प्रयाजा इज्यन्ते"[३] इति विकृतियागविषयकवाक्यविशेषेण पश्चात् विहितया नवत्वसंख्यया बाध्यते। एवम् एव ज्योतिष्टोमयागः प्रकृतिः, श्येनयागादयो विकृतयः। अत्रातिदेशवाक्यबलेन यत् कुशाद्रव्यं प्रथमतः प्राप्तं तत् "शरमयं बर्हिर्भवति"[४] इति वाक्येन पश्चात् विहितेन शरद्रव्येण बाध्यते। इत्थं पश्चाद्भाविना पदार्थेन पूर्वभावी पदार्थः बाध्यते इति प्रकृतसूत्रस्य तात्पर्यम् अवगम्यते।

अपच्छेदविषयेऽपि अयम् एव नियमः प्रवर्तते। तथाहि– ज्योतिष्टोमयागे यज्ञशालातो बहिष्पवमानदेशं प्रति परस्परं धृतकच्छा ऋत्विजो गच्छन्तीति श्रूयते– "अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारम् उद्गातोद्गातारं प्रतिहर्ता प्रतिहर्तारं मैत्रावरुणो मैत्रावरुणं यजमानो यजमानं ब्रह्मा"[५] इति। अत्र सन्तनुयाद् इत्यस्य कच्छं धृत्वा अनुगच्छेत्[६] इत्यर्थः। एवम् उत्तरोत्तरो जनः पूर्वपूर्वस्य जनस्य कच्छं धृत्वा अनुगच्छेद् इति पिपीलिकासञ्चरणन्यायेन तेषां गमनं समुपदिष्टम्। अत्र यदि गमनसमये कस्यापि हस्तात् कच्छविच्छेदो भवति तर्हि सः अपच्छेदः इत्युच्यते। किञ्च, यस्य हस्तात् कच्छविच्छेदो जातस्तस्यैवायम् अपच्छेद इत्युच्यते। यथा अध्वर्योः कच्छं प्रस्तोता त्यजति चेत् स प्रस्तोत्रपच्छेद इत्युच्यते। इमम् एव अपच्छेदम् उद्दिश्य वेदे प्रायश्चित्तं श्रूयते– "यदि सर्पतां प्रस्तोता विच्छिद्येत ब्रह्मणे वरं दत्त्वा तम् एव पुनर्वृणीते। यद्युद्गाता दक्षिणेनेष्ट्वा तेन पुनर्यजेत। यदि प्रतिहर्ता सर्ववेदसं दद्यात्।"[७] इति। अस्याः श्रुतेरर्थस्तावत्– प्रस्तोत्रपच्छेदे ब्रह्मणे वरः दातव्यः, प्रतिहर्त्रपच्छेदे

---

२ भाट्टदीपिकायां ७.१.१

३ तैत्तिरीयब्राह्मणे काण्डः १, प्रपाठकः ६, अनुवाकः ३, मन्त्रः ३

४ काठकसंहिता ११.८

५ मानवश्रौतसूत्रे २/३/६/२। अस्य मन्त्रस्य प्रतीकरूपेण "अध्वर्युं विनिष्क्रामन्तं प्रस्तोता सन्तनुयात् तं प्रतिहर्ता तम् उद्गाता तं ब्रह्मा तं यजमानः" इत्येवम् अद्वैतसिद्धौ पङ्क्तिः दृश्यते।

६ भाट्टदीपिका ६.५.१८

७ मानवश्रौतसूत्रे ३/१/६/१। अस्य प्रतीकरूपेण अद्वैतसिद्धौ "यदि प्रस्तोता अपच्छिन्द्यात् ब्रह्मणे वरं दद्यात्। यदि प्रतिहर्ता सर्ववेदसं दद्यात्। यद्युद्गाता अदक्षिणं यज्ञम् इष्ट्वा तेन पुनर्यजेत तत्र तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्" इत्येवं पंक्तिः दृश्यते।

सर्वस्वदक्षिणाको यागः कर्तव्यः, उद्गात्रपच्छेदे च समारब्धं यागम् अदक्षिणाकं कृत्वा तस्य द्वितीयप्रयोगे सा दक्षिणा दातव्या या प्रथमप्रयोगे दातव्या आसीद् इति।

अत्र यदि प्रथमं प्रतिहर्त्रपच्छेदो भवति ततः उद्गात्रपच्छेदो भवति तर्हि प्रतिहर्त्रपच्छेदनिमित्तकः सर्वस्वदक्षिणाको यागः कर्तव्यः उत उद्गात्रपच्छेदनिमित्तकः अदक्षिणाको यागः कर्तव्यः इति संशयो जायते। पूर्वपक्षिणां मते तु, प्रतिहर्त्रपच्छेदनिमित्तकः सर्वस्वदक्षिणाको यागः करणीयः। यतो हि यस्मिन् काले प्रतिहर्त्रपच्छेदो जायते तस्मिन् काले उद्गात्रपच्छेदो नास्तीति असञ्जातविरोधित्वेन तस्यैव अनुष्ठानं कर्तव्यम्। तदा सिद्धान्ती आह, "नानुपमृद्य पूर्वं तद् विरोध्युत्तरम् उत्पत्तुम् अर्हति"[८] इति न्यायात् पूर्वस्य विनाशम् अकृत्वा उत्तरस्य उत्पत्तिर्भवितुं नार्हति। इत्थम् उत्तरज्ञानेन पूर्वज्ञानस्य बाधितत्वात् तेन सर्वस्वदक्षिणारूपस्य प्रायश्चित्तस्य विधानं कर्तुं न शक्यते। उत्तरज्ञानस्य तु किमपि बाधकं नास्तीत्यतस्तेन अदक्षिणाकयागस्य विधानं क्रियते। एवम् अत्र यथा पश्चाद्भाविना उद्गात्रपच्छेदनिमित्तकेन अदक्षिणाकयागेन पूर्वभाविनः प्रतिहर्त्रपच्छेदनिमित्तकस्य सर्वस्वदक्षिणाकयागस्य बाधो भवति तथा पश्चाद्भाविना अद्वैतागमेन पूर्वभाविनः द्वैतसत्यत्वग्राहिप्रत्यक्षस्य बाधो भवतीति अद्वैतराद्धान्तः। ननु कथं पुनः प्रत्यक्षस्य पूर्वभावित्वम् आगमस्य च उत्तरभावित्वम् इति चेद् उच्यते, प्रथमं शब्दस्य श्रोत्रजप्रत्यक्षम् उत्पद्यते, ततः शाब्दज्ञानं जायते इति तयोः पूर्वापरत्वम् उक्तम्। अयम् एव प्रकृतः अपच्छेदन्यायः इत्यवगन्तव्यम्।

## २. पूर्वपक्षशङ्का

व्यासतीर्थाचार्याः अनेनैव दृष्टान्तभूतेन अपच्छेदन्यायेन सह दार्ष्टान्तिकस्य आगमप्राबल्यविचारस्य वैषम्यं प्रदर्शयन्ति। तत्र प्रथमम् एतयोः सावकाशनिरवकाशत्वेन वैषम्यं प्रदर्श्यते। तथाहि– दृष्टान्ते सर्वस्वदक्षिणाकयागस्य सावकाशत्वात् उत्तरभाविनापि अदक्षिणाकयागेन बाधो युक्तः। किन्तु दार्ष्टान्तिके प्रत्यक्षस्य निरवकाशत्वात् आगमेन बाधो नैव युज्यते। ननु सर्वस्वदक्षिणाकयागस्य सावकाशत्वं कथम् इति चेद् उच्यते, यत्र केवलस्य प्रतिहर्तुरिव अपच्छेदो जातस्तत्र सर्वस्वदक्षिणाको यागः

---

[८] अभावाद् भावोत्पत्तिः नानुपमृद्य प्रादुर्भावाद् (न्यायसूत्रं ४/१/१४) इत्यस्य वात्स्यायनभाष्यं द्रष्टव्यम्

कर्तव्य इति सावकाशत्वं तस्य। यदा प्रतिहर्त्रुद्गात्रोः युगपद् एव अपच्छेदो जातस्तदा विकल्पेन सर्वस्वदक्षिणाको यागोऽपि कर्तुं शक्यत इति तस्य सावकाशत्वम्। यत्र पूर्वम् उद्गात्रपच्छेदो जातस्तदनन्तरं प्रतिहर्त्रपच्छेदो जातस्तत्रापि सर्वस्वदक्षिणाको यागः कर्तव्यः इति तस्य सावकाशत्वम्। इत्थं त्रिधा दृष्टान्ते सावकाशत्वं सिध्यति। यद्यत्र सर्वस्वदक्षिणाकयागविषये सावकाशत्वं नाङ्गीक्रियेत तर्हि “यदि प्रतिहर्तापच्छिद्येत सर्ववेदसं दद्यात्” इति शास्त्रं निरवकाशत्वात् अप्रमाणं स्यात्। तस्मात् अवकाशाभावे कस्यापि शास्त्रस्य बाधः कर्तुं न शक्यते इत्यतः महर्षिः जैमिनिः “विप्रतिषेधाद्विकल्पः स्यात्” [मीमांसासूत्रम्– ६.५.५१] इत्यधिकरणे द्वयोः युगपद् अपच्छेदे विकल्पं व्यधात्। एवम् अपच्छेदन्यायस्य सावकाशत्वात् तस्य बाधः कर्तुं शक्यते। किन्तु आगमेन प्रत्यक्षस्य बाधे तत् निरवकाशं भवतीति बाधः कर्तुं न शक्यते। तस्मात् प्रकृते दार्ष्टान्तिके अपच्छेदन्यायवैषम्यम् एवास्ति।

एतावता सर्वस्वदक्षिणाकयागस्य सावकाशत्वं प्रदर्श्य सावकाशस्यापि तस्य बाधो न भवतीति प्रदर्श्यते। तथाहि– “यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद् यथेतरस्मिन्” [मीमांसासूत्रम्– ६.५.५५] इत्यधिकरणे स्पष्टतया उक्तम्– यदि उद्गात्रपच्छेदः प्रतिहर्त्रपच्छेदात् पश्चात् जातस्तर्हि उद्गात्रपच्छेदनिमित्तकः यः अदक्षिणाकयागः तं सम्पाद्य ततः पश्चात् ज्योतिष्टोमस्य द्वितीयप्रयोगः अनुष्ठीयते। तस्मिंश्च प्रयोगे “तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्” इति श्रुत्या या दक्षिणा प्रतिपादिता सा प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदित्साया अबाधेन सर्वस्वरूपैव, न तु नित्या द्वादशशतरूपा नैमित्तिकेन नित्यस्य बाधात्। इत्थं प्रतिहर्त्रपच्छेदनिमित्तकः सर्वस्वदक्षिणाकयागः प्रथमप्रयोगेऽकृत्वा द्वितीयप्रयोगे क्रियते। तस्मात् सर्वथा तस्य बाधो भवतीति न वक्तव्यम्। उक्तं च– “तस्य प्रयोगान्तरे निक्षेपः”[१] इति। तस्मात् दृष्टान्ते अपच्छेदस्थले बाध्यबाधकभावस्याभावात् तदादाय आगमस्य प्रत्यक्षबाधकत्वम् उपपादयितुं न शक्यते।

ततः अपच्छेदस्थले विरोधाभावः प्रदर्शितः। तथाहि– बदरीफलं पूर्वम् अपक्वदशायां श्यामरूपविशिष्टं, ततः पक्वदशायां रक्तरूपविशिष्टं भवति। अत्र श्यामरक्तरूपयोः विरोधाभावात् श्यामरूपेण रक्तरूपं न बाध्यते। एवम् एव यत्र प्रथमं प्रतिहर्त्रपच्छेदो भवति ततश्च उद्गात्रपच्छेदो भवति तत्र निमित्तक्रमानुसारेणैव प्रथमम् अदक्षिणाकयागस्य ततश्च

[१] ६.५.५५ मीमांसासूत्रस्य टुप्टीका

सर्वस्वदक्षिणाकयागस्य अनुष्ठानं भवति। अत्रेदम् अवधेयम्, ज्योतिष्टोमस्य द्वितीयप्रयोगे दक्षिणायाः सर्वस्वरूपत्वात् सर्वस्वदक्षिणाकयागानुष्ठानं भवतीति उक्तम्। तस्माद् अत्र अदक्षिणाकसर्वस्वदक्षिणाकयागयोः परस्परविरोधाभावात् उत्तरभाविना पूर्वभाविनो बाधो भवतीति नैव वक्तव्यम्। तत्रापच्छेदाधिकरणेऽपि नैमित्तिकशास्त्रस्यार्थः प्रोक्तः– "निमित्तोपजननात् प्राग् अन्यथाकर्तव्योऽपि क्रतुर्निमित्ते सत्येवं कर्तव्यः" [१०] इति। अर्थात् अपच्छेदादिनिमित्तानाम् उत्पत्तेः प्राक् ज्योतिष्टोमादिकर्मणाम् अनुष्ठानं यथा भवति तथा अपच्छेदादिनिमित्तानाम् उत्पत्तेः परं नैव भवति। तस्माद् अत्र तेषाम् अन्यथा अनुष्ठानम् एव उक्तम्, न तु बाधः उक्तः। एवं दृष्टान्तस्य अपच्छेदन्यायस्य वैषम्यं दार्ष्टान्तिके प्रदर्श्य आगमेन प्रत्यक्षस्य बाधो न भवतीति प्रदर्शितं पूर्वपक्षिभिः।

**३. शङ्कासमाधिः**

सरस्वतीस्वामिभिरुक्तम्– अत्र दृष्टान्तदार्ष्टान्तिकयोः साम्यम् एव वर्तते, न तु वैषम्यम्। तथाहि– दृष्टान्ते सर्वस्वदक्षिणाकयागस्य यथा त्रिषु स्थानेषु सावकाशत्वं वर्तते तथा व्यावहारिकप्रामाण्ये प्रत्यक्षस्य सावकाशत्वम् अस्ति। तस्मात् सावकाशत्वात् अद्वैतागमेन द्वैतसत्यत्वग्राहिप्रत्यक्षस्य बाधो भवितुम् अर्हतीति न अपच्छेदन्यायवैषम्यम्। किञ्च, यथा दृष्टान्ते ज्योतिष्टोमस्य प्रथमप्रयोगे उत्तरभाविना अदक्षिणाकयागेन पूर्वभाविनः सर्वस्वदक्षिणाकयागस्य विरोधात् बाधो भवतीति दृश्यते तथा दार्ष्टान्तेऽपि पारमार्थिकप्रामाण्यांशे आगमेन सह प्रत्यक्षस्य विरोधात् उत्तरभाविना आगमेन पूर्वभाविनः प्रत्यक्षस्य बाधो भवति। तस्माद् अपच्छेदन्यायदृष्टान्तोऽत्र युक्त एव। इमम् एव न्यायम् आश्रित्य सगुणसप्रपञ्चबोधकश्रुतीनां निर्गुणनिष्प्रपञ्चबोधकश्रुतिभिर्बाधः प्रतिपादितः। तथाह्युक्तम्–

तत्परत्वात् परत्वाच्च निर्दोषत्वाच्च वैदिकम्।
पूर्वस्य बाधकं नायं सर्प इत्याप्तवाक्यवत्॥

[प्रमाणमाला ]

अस्य श्लोकस्यार्थः– यथा 'नायं सर्पः' इत्याप्तवाक्यम् 'अयं सर्पः' इति सर्पभ्रमं बाधते तथा 'एकम् एवाद्वितीयम्' इत्यादीनि वाक्यानि पूर्वभाविप्रत्यक्षं बाधन्ते। यतो हि एतानि वाक्यानि परमतात्पर्यविषयीभूतार्थबोधकानि

[१०] शास्त्रदीपिकायाम् अपच्छेदाधिकरणम्

प्रत्यक्षात् परभावीनि अपौरुषेयत्वेन करणादिदोषरहितानि च वर्तन्ते। एवम् अस्मिन् श्लोके “आगमः पूर्वस्य बाधकः तत्परत्वात् परत्वात् निर्दोषत्वात् नायं सर्पः इत्याप्तवाक्यवत्” इत्यनुमानप्रयोगः एव कृतः।

## ४. पूर्वपक्षिणां हेत्वाभासप्रदर्शनम्

अस्मिन्ननुमाने ये हेतवः आनन्दबोधाचार्यैरुक्ताः तेषाम् आभासत्वं प्रदर्शयन्ति पूर्वपक्षिणः। तथाहि– द्वैतसत्यत्वग्राहिप्रत्यक्षेण अनुमानादिप्रमाणान्तरेण च विरोधात् “एकम् एवाद्वितीयम्” इत्यादिवाक्यानाम् अद्वैते तात्पर्यं नास्तीति तत्परत्वम् इति हेतुः स्वरूपासिद्धः। प्रमायाः परं यो भ्रमो जायते स तस्मात् पूर्वभाविन्याः प्रमाया बाधको नास्ति। इत्थं तस्मिन् भ्रमे हेतुः परत्वम् अस्ति चेद् अपि साध्यं पूर्वबाधकत्वं नास्ति। एवम् एव “न क्त्वा सेट्” [अष्टाध्यायी– १.२.१८] इति सूत्रं “मृडमृदगुधकुशक्लिशवदवसः क्त्वा” [अष्टाध्यायी– १.२.७] इति सूत्रापेक्षया परम् अस्ति चेद् अपि परस्थं “न क्त्वा सेट्” इति सूत्रं पूर्वस्थेन “मृडमृदगुधकुशक्लिशवदवसः क्त्वा” इति सूत्रेण बाध्यते। अत्रापि “न क्त्वा सेट्” इति सूत्रे हेतुः परत्वम् अस्ति चेद् अपि साध्यं पूर्वबाधकत्वं नास्ति। तस्मात् परत्वम् इति हेतुर्व्यभिचारी वर्तते। द्वैतग्राहिप्रत्यक्षादिभिः अद्वैतश्रुतीनाम् अद्वैते तात्पर्याभावेऽपि अर्थान्तरे उपासनादौ प्रामाण्यं वर्तते। तस्मात् तासाम् अर्थान्तरप्रामाण्येन निर्दोषत्वात् प्रत्यक्षादिबाधे इदं निर्दोषत्वम् अन्यथासिद्धं वर्तते। एवं त्रिभिरपि हेतुभिः आगमस्य प्रत्यक्षबाधकत्वम् उपपादयितुं न शक्यते। उक्तं च–

तत्परत्वम् असिद्धत्वात् परत्वं व्यभिचारतः।
निर्दोषतान्यथासिद्धेः प्राबल्यं नैव साधयेत्॥

## ५. सिद्धान्तिनां सद्धेतुत्वसाधनम्

सिद्धान्ती आह, प्रत्यक्षादीनां व्यावहारिकप्रामाण्यम् अद्वैतश्रुतीनां च तात्त्विकप्रामाण्यम् इति तयोः विरोधो नास्ति। अतः अद्वैतश्रुतीनाम् अद्वैतबोधकत्वे विरोधाभावात् तत्परत्वम् इति हेतुर्निर्दुष्ट एव वर्तते। अत्र परत्वम् इति द्वितीयहेतोः मानान्तराबाधितत्वे सति परत्वमित्यर्थः विवक्षितः। तदा प्रमायाः अनन्तरं यो भ्रम उत्पद्यते स तदुत्तरकाले जायमानेन प्रमाज्ञानेन बाध्यते इति मानान्तरबाधितत्वात् तस्मिन् परत्वं नास्ति। एवं हेतुसाध्ययोः परत्वपूर्वबाधकत्वयोरुभयोरपि असत्त्वात् न व्यभिचारदोषः। अपि च,

यथा वेदे “अग्निहोत्रं जुहोति”[११] इत्यस्मात् वाक्यात् परं “यवागूं पचति”[१२] इति वाक्यं पठ्यते चेद् अपि अग्निहोत्रात् परं यवागूपाकस्य व्यर्थत्वात् अर्थक्रमानुसारेण यवागूपाकस्य पूर्वभावित्वम् उच्यते मीमांसायां तथा “न क्त्वा सेट्” इति सूत्रं “मृडमृदगुधकुशक्लिशवदवशः क्त्वा” इति सूत्रात् परं पठ्यते चेद् अपि क्त्वाप्रत्ययस्य स्वभावसिद्धं यत् कित्त्वं तस्य “न क्त्वा सेट्” इत्येनन निषेधः न क्रियते चेत् “मृडमृदगुधकुशक्लिशवदवशः क्त्वा” इत्येनन पुनः कित्त्वस्य विधानं कर्तुं न शक्यते इति अर्थतः “न क्त्वा सेट्” इत्यस्य पूर्वभावित्वं स्वीक्रियते। तस्मात् “न क्त्वा सेट्” इत्यत्रापि उभयोः हेतुसाध्ययोः परत्वपूर्वबाधकत्वयोरभावात् परत्वहेतुर्न व्यभिचारी। किञ्च, अद्वैतश्रुतीनाम् अद्वैतार्थे तात्पर्ये निश्चिते तत्रैव तेषां प्रामाण्यात् निर्दोषत्वं सिध्यति। अतः अर्थान्तरप्रामाण्येन न निर्दोषत्वम् इत्यतः प्रत्यक्षादिबाधे इदं निर्दोषत्वं नान्यथासिद्धम्। अतस्त्रिभिरपि हेतुभिः अद्वैतागमस्य द्वैतसत्यत्वग्राहिप्रत्यक्षबाधकत्वं साधयितुं शक्यत इति अनुमानप्रयोगः युक्त एव वर्तते। एवं प्रकृते आगमप्राबल्यविचारे मीमांसाशास्त्रगतस्य अपच्छेदन्यायस्य सुष्ठु समन्वयात् अपच्छेदन्यायवैषम्यम् अस्तीति पूर्वपक्षिणां शङ्का निरालम्बनैवेति शिवम्।

✶ ✶ ✶

## Bibliography


1. *Advaitasiddhiḥ* Bālabodhinīsahitā; Madhusūdanasarasvatī; Śītāṃśuśekhara Devaśarmā (ed.); Ratna Publications; Benaras; 2008
2. *Advaitasiddhiḥ* Gurucandrikāvyākhyāsamalaṅkṛtā; Madhusūdanasarasvatī; Śrīnivāsa Veṅkaṭa & Narasiṃha Śāstrī (eds.); Mysore Sarvakara Mudranalaya; Mysore; 1983
3. *Vaiyākaraṇasiddhāntakaumudī*; Bhaṭṭoji īkṣita; Giridhara Śarmā & Parameśvarānanda Śarmā (eds.); Motilal Banarasidass; Delhi; 2011; vol IV


✳ ✳ ✳

[११] जैमिनीयब्राह्मणम् १/०२१-०३०

[१२] तैत्तिरीयब्राह्मणम् २.१.५.६

# सिद्धान्तकौमुदीव्याख्या मितभाषिणी

गोपीकृष्णन्-रघुः *

**Abstract**

[*Śāradārañjana Rāya* (Sharadaranjan Ray) was an eminent scholar based in Kolkata. He lived in the first half of the 20th century. He produced a number of translations and commentaries on a lot of *Saṃskṛta* classics. One such work is *'Mitabhāṣiṇi'*, a commentary on *Bhaṭṭojidikṣita's Siddhāntakaumūdī.* This paper is a short review of the commentary.]

## ०. भूमिका

सुविदितम् एव समेषां यद् अद्यत्वे व्याकरणाध्ययनं नाम प्रथमतः कौमुद्यध्ययनम् एव। विना कौमुदीं व्याकरणाध्ययनं कालेऽस्मिन् अचिन्त्यम् एव सञ्जातम्। इयम् अवस्था कौमुद्याः शास्त्रेऽस्मिन् विद्यमानस्य स्थानस्य सूचिका भवति। ईदृशं महत्त्वं कौमुद्याः कथम् अभूद् इति पश्यामश्चेत् एते अंशाः पुरतः आयान्ति–

- ☆ प्रथमतः, कौमुदी यद्यपि प्रक्रियाक्रमे न नूतनः ग्रन्थः तथापि प्राग्भूतग्रन्थानाम् अपेक्षया इयं समग्रा सरला च वर्तते। प्रक्रियाकौमुद्यादिषु ग्रन्थेषु पाणिनेः सर्वाण्यपि सूत्राणि नोल्लिखितानि। किन्तु कौमुद्यां सर्वाण्यपि सूत्राणि सङ्कलितानि तानि च सयुक्तिकं पूर्वपरसम्बन्धपूर्वकं प्रतिपादितानि च। तेन कौमुद्याः समग्रस्य अध्ययनेन अष्टाध्याय्याः अपि समग्रपाठः जायते।
- ☆ द्वितीयतः, दीक्षितः नात्र केवलं पाणिनेः सूत्रार्थं वर्णयति। अपि तु तत्सम्बद्धभाष्यवार्तिकाशयानाम् अपि चर्चां विदधाति। अपेक्षितेषु स्थलेषु काशिकाकारादीनाम् अपि मतानाम् उपस्थापनं करोति। तेन दीक्षितपर्यन्तानाम् आचार्याणां मतानि एकस्याः कौमुद्याः अध्ययनेनावगम्यते। तथैव दीक्षिताभिप्रायोऽपि तत्रैव स्पष्टीभवति। अतः समग्रस्य व्याकरणशास्त्रस्य एकं लघुचित्रं ग्रन्थाध्ययनेन लभ्यते।

* सहायकाध्यापकः, संस्कृतदर्शनविभागे, रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोध-संस्थाने, reghu.gopikrishnan@gmail.com

☆ तृतीयतः दीक्षितः पाणिनीयमार्गावलम्बी भवति। अतः सः अत्र पाणिनीयव्याकरणे शुद्धाशुद्धभेदः यः वर्तते तद् एवानुसरति। प्रक्रियाकौमुदीकारवत् क्वचिदपि नासौ पाणिनिभिन्नव्याकरणे शब्दसाधुत्वम् अङ्गीकरोति। तेन पाणिनीयव्याकरणस्य स्पष्टप्रवक्तृत्वम् अस्य समजनि। तथैव अयं ग्रन्थे स्थाने स्थाने मतान्तरं प्रदर्श्य खण्डयति। तेन अस्य सिद्धान्तस्य प्रबलता जायते। अनेन चाचार्येण मुनित्रयवचनेनैव स्वसिद्धान्तानां समर्थनं करोति। अतः ते सर्वेऽपि प्रामाणिकाः भवन्ति। तथैव काव्यादिषु विद्यमानप्रयोगाणाम् अपि प्रयोगोपपत्तिं विचारयति। तेन अध्ययने सौलभ्यं प्रायोगिकक्षमता च भवति। तथैव प्राचां प्रयोगाणाम् अप्यवगमनं सुलभं भवति।

व्याकरणाधिगमे अद्यत्वे प्रथमसोपानत्वेन वर्तमानस्य वैय्याकरणसिद्धान्तकौमुद्याः बह्व्यः व्याख्याः वर्तन्ते। वङ्गदेशे च विशिष्य यत्र व्याकरणस्य प्रक्रियाक्रमस्य अध्ययनस्य विशिष्टपरम्परा एवावर्तत। तत्र भवत्येवास्य ग्रन्थस्य माहात्म्यम् अधिकं व्याकरणाध्ययने। अत एवास्मिन्नपि देशे कौमुद्याः व्याख्याः आविरभवन् साम्प्रतिकेऽपि काले। तासु व्याख्यासु अन्यतमा वर्तते शारदारञ्जनरायवर्येण कृता १९२६ तमे क्रिस्ताब्दे कलिकातानगरात् कुमुदरञ्जनरायमहाभागेन प्रकाशिता मितभाषिणी इति संस्कृतव्याख्या। व्याख्याम् इमाम् आश्रित्यात्र किञ्चिद् इव प्रस्तूयते।

**१. व्याख्यातृपरिचयः**

व्याख्याकाराः शारदारञ्जनरायमहाभागाः कलिकातायां विद्यमानस्य विद्यासागरमहाविद्यालयस्य प्राचार्याः आसन्। तेषां कृतिजालं न केवलं व्याकरणे अपि तु काव्यनाटकादिषु चावर्तत। तैः रघुवंश-कुमारसम्भव-शिशुपालवधकाव्यानां मुद्राराक्षस-शाकुन्तल-स्वप्नवासवदत्त-प्रतिमा-चारुदत्तोत्तररामचरित-रत्नावलीनाटकानां साहित्यदर्पण-काव्यादर्शयोश्च व्याख्या कृता वर्तते। आङ्ग्लभाषायाम् अप्यसौ निपुणः आसीद् इति भासस्य देशकालविषये चर्चां कुर्वन् प्रस्तुतेन पत्रेण स्पष्टम् अवगम्यते। तादृशस्यास्य विदुषः छात्रवात्सल्यकारणज्जाता इयं व्याख्या मितभाषिणी। सरलया भाषया लिखिता छात्रोपयोगिनी च वर्तते। छात्राणां कौमुद्यध्ययनकाले याः समस्याः भवितुम् अर्हन्ति ताः मनसि निधायैव एषा कृतेति पुरोवाचि न्यरूपयत् ग्रन्थकर्ता।

## २. व्याख्यावैशिष्ट्यम् ।

अस्याः व्याख्यायाः अनुपमवैशिष्ट्यम् इदं वर्तते यद् इयं नातिविस्तृता न वा लघुकाया वर्तते। अन्वर्थनामा इयम् अस्ति मितभाषिणीति। अल्पैः शब्दैः विषयस्य स्पष्टप्रतिपत्तिः यथा स्यात् तथात्र प्रयासः दृश्यते। यथा 'आदिरन्त्येन सहेता' इति सूत्रस्य व्याख्या– "स्वं रूपम् इत्यनुवर्तते। शिवसूत्रेषु यस्य कस्यचित् समूहस्य अन्ते यदि इत्संज्ञकः कश्चिद् वर्णः स्यात् तदा तस्य समूहस्य आदिवर्णः तेनैव इता परभूतेन सह उच्चार्यमाणः स्वस्य च रूपस्य ग्राहको भवति। स्वस्य च इत्युच्यते कस्य पुनरपरस्य? नहि परभूतस्य इत्संज्ञकस्य वर्णस्य। तस्य तु लोपं वक्ष्यति। लुप्यमानस्य ग्रहणं न भवति। आदिः अन्त्यः इति मध्यापेक्षौ शब्दौ, तत् मध्यपतितस्य वर्णसमूहस्य च प्रत्येकं ग्राहको भविष्यति इत्येवम् आशयः।" इति। अनेन चाल्पशब्देनापि अवबोधः न कष्टाय इति स्पष्टम्।

अस्याः व्याख्यायाः अन्यद् वैशिष्ट्यं वर्तते यद् अत्र सूत्रेष्वनुवृत्तैः पदैः अन्वयः दर्शितः। ततश्च बोद्धॄणां सूत्रार्थबोधः सुकरः भवति। यथा अनचि च इत्यत्र 'अचो रहाभ्याम्' इति पूर्वसूत्रात् अचः इति पञ्चम्यन्तम् अनुवर्तते द्वे इति च। 'यरोऽनुनासिके' इतः यरः इति षष्ठ्यन्तं स्थानी वा इति चानुवृत्तम्। ततः अचः यरः द्वे वा अनचि च इति मिलितोऽन्वयः इति। इयं रीतिः छात्राणाम् अत्यन्तम् उपकारकं भवतीत्यत्र नास्ति संशयः। अयं मार्गः सर्वेष्वपि सूत्रेष्वनुवर्तते।

व्याख्यायाम् अस्यां व्याख्याकारः तत्र तत्र अन्यमतसमीक्षणम् अपि करोति। यथा– 'षष्ठी स्थानेयोगा' इति सूत्रव्याख्यावसरे स्थानेयोगपदस्य व्युत्पत्तिं प्रसाध्य मतान्तरं समीक्ष्य निराकरोति। "इह स्थाने इति सप्तम्यन्तस्य अनुकरणम् इति न। अनुकरणे तु स्थाने इति प्रातिपदिकं क्लीबे। तदा 'निपातनात् सप्तम्या अलुक्' इति भाष्यवाक्यम् असङ्गतं स्यात्। किञ्च स्थानेन योगो यस्या इति भाष्योक्तं व्याख्यान्तरम् अपि न सङ्गच्छते" इति। तथैव 'परनित्यान्तरङ्गापवादानाम् उत्तरोत्तरं बलीयः' इत्यस्य व्याख्याकाले नागेशोक्तस्य अन्तरङ्गबहिरङ्गलक्षणयोः समालोचना कृता वर्तते। तत्र नागेशोक्तं लक्षणवाक्यम् उद्धृत्य परं कथयति– "नूनं प्रक्षिप्तम् एतत्। बहिरङ्गम् आश्रित्य अन्तरङ्गव्याख्यानं न समीचीनम्। विज्ञातेनैव अविज्ञातं व्याख्यायते। बहिरङ्गं चेत् ज्ञातम् अन्तरङ्गम् अपि ज्ञायत एव किम् इयता व्याख्यानेन। अन्ते पुनः तदीयनिमित्तसमुदायानन्तर्भूताङ्गकम् इत्यन्तरङ्गाश्रयं बहिरङ्गनिरूपणम्

अन्योन्याश्रयदूषितम्।" एवम् अत्र व्याख्याकारः निश्शङ्कं परमतालोचनम् अपि विदधाति।

न केवलं परमतालोचनं किन्तु स्वमतम् अपि प्रस्तौति तत्र। पूर्वोक्तस्थले एव अन्तरङ्गलक्षणं स्वीयं प्रस्तौति व्याख्यायाम् एवम्– "अन्तरङ्गता बहिरङ्गता च लक्ष्यानुसारतो भवति। अन्तः मध्ये लक्ष्यभूतवर्णसङ्घातस्य मध्ये अङ्गानि निमित्तानि– विधिप्रवृत्तेरुपकारकाणि विधिभाक् विधिहेतुश्च इति यावत्– यस्य विधेः सः अन्तरङ्गो विधिः।" इति। लक्षणस्यास्य योग्यायोग्यविचारस्य नायं समयः इति तन्नात्र विचार्यते।

एवम् अपवादस्यापि व्युत्पत्त्यार्थं बोधयति– "अपोद्यते प्रत्यादिश्यते विषयान्निवर्त्यते अनेन इत्यपवादो विषयसङ्कोचः तदर्थको विधिरिति शेषः।" एवं स्थानेषु स्वाभिमतस्यापि व्याख्यां विधाय स्ववैशिष्ट्यं वैदुष्यञ्च प्रकटयति ग्रन्थकारः।

व्याख्याशैली अपि मनोरमा वर्तते। न शास्त्रीया क्लिष्टा शैली दृश्यते किन्तु सुगम्या सरला च प्रसादगम्भीरा। यथा छात्राणाम् अवगमः स्यात् तथा लघुवाक्यैः लिखितायाम् अस्यां सन्धिः अविवक्षितः वर्तते। नाम अनिवार्येष्वेव स्थलेषु सन्धिः कृतः। पुनश्च प्रश्नोत्तररूपेण विषयस्योपस्थापनं वर्तते। तेन च्छात्राणां जिज्ञासा वर्धते तेन विषयः अक्लिष्टतया बुद्धौ प्रविशति। एतद् दृष्ट्वा भाष्यकारस्य शैलीम् अनुकर्तुं व्याख्यात्रा श्रमः कृतः इति।

भाषापि सरला सुगम्या वर्तते। अत्यन्तसरलशब्दैः विषयप्रतिपादनं दृश्यते। नात्र शब्दाडम्बरः दृश्यते न वा वाक्यविन्यासवैपुल्यम्। ललितपदक्रमरम्या व्याख्या इयं वर्तते।

**३. व्याख्यान्यूनताः**

एवं सत्स्वपि बहुषु गुणेषु नात्यन्तं लोपहीनम् इदं वर्ततेऽस्मद्दृष्ट्या। कदाचिद् इमे लोपाः दृष्टिभेदजन्याः स्युः। ततः न तत्र कर्तुः दोषभाक्त्वं भवति। तथापि किञ्चिद् अत्र प्रदर्श्यते यन्मम दृष्ट्या लोपः इति भाति।

सर्वप्रथमं तु एतद् एव वक्तव्यं यत् मितत्वसम्पादनार्थं प्रयत्नं कुर्वन् व्याख्याता क्वचिद् अपेक्षितस्याप्यंशस्य त्यागं कृतवान् येन पठितॄणां क्लेशः उत्पन्नः। यथा आदावेव 'हलन्त्यम्' इति सूत्रव्याख्यायां यद्यपि द्वयोः पृथग्व्याख्यां करोति तथापि तयोः द्वयोः पृथग्व्याख्यापेक्षां न विवृणोति। अन्योन्याश्रयदोषस्य प्रस्तावनां विना कथं वा सूत्रावृत्तिः व्याख्यातुं शक्या। तत्र व्याख्यातुरयम् एकः लोपः इति मे मतिः।

द्वितीयम् अस्ति स्थानिवत्सूत्रे, अचः परस्मिन्नित्यत्र च। उभयत्र व्याख्यात्रा केवलं सूत्रार्थमात्रस्य व्याख्या विहिता। न उदाहरणानां प्रस्तावः वर्तते न वा सूत्रार्थस्य विशेषविचारः। सूत्रयोः शास्त्रेऽस्मिन् यथा उपयोगः वर्तते तद्दृष्ट्या अवश्यम् एव तयोः विशिष्टं व्याख्यानम् अपेक्षितं किन्तु तन्न कृतम् इति खेदावहः विषयः।

तथैव सूत्रव्याख्यावसरे यथोदाहरणानां विचारस्य प्राधान्यं तथैव प्राधान्यं वर्तते प्रत्युदाहरणविचारे। व्याख्याङ्गभूतस्य प्रत्युदाहरणविचारस्य व्याख्यायामभावः अस्यापूर्णतां सम्पादयति। दलसार्थक्यविचारेऽपि व्याख्यातुः यद् औदासीन्यं तद् अपि न युक्तं मे भाति।

**४. उपसंहारः**

सतीष्वप्येतादृशीषु विप्रतिपत्तिषु व्याख्येयम् अवश्यम् एव कौमुद्याः युक्तार्थप्रतिपादने सफला छात्राणाम् उपकारिणीति नास्ति संशीतिः। अवश्यम् एवेयम् अध्ययनयोग्या काचिद् व्याख्या वर्तते यस्याम् इतोऽपि शोधकार्याणि भवेयुः। अवश्यञ्चास्याः पुनप्रसारणं भवेद् येन वङ्गदेशीयसंस्कृतमण्डलं धन्यताम् आप्नुयात्।

* * *

## Bibliography


1. *Siddhāntakaumudī (mitabhāṣiṇī-vyākhyopetā)*; Bhaṭṭojīdīkṣita; Śāradārañjana Rāya (comm.); Kumudarañjana Rāya (ed.); Kolkata; 1926


* * *

# नागेशाभिमतापादानस्वरूपविमर्शः

नीरज-कुमार-भार्गवः *

**Abstract**

[There is an obvious conflict between the *Naiyāyikas* and the *Vaiyākaraṇas* about the way of representing *Apādānakāraka*. There are even differences in the views of the *Naiyāyikas* and the *Vaiyākaraṇas* themselves. The present paper summarises the views of *Gadādharabhaṭṭācārya* on *Apādāna* and *pañcamī* followed by the style of *Śābdabodha* accordingly. After that, the author has summarised the views of *Nāgeśabhatta* on *Apādana*. *Nāgeśabhaṭṭa*'s depictions of the same thing bear small differences in his different books. All these differences are clearly discussed in the paper.]

## ०. भूमिका

कारकेष्वन्यतमं कारकं विद्यतेऽपादानं नाम। तस्यैव स्वरूपं विविधेषु ग्रन्थेषु शास्त्रज्ञैः स्वस्वसिद्धान्तानुसारं वर्णितम्। महाभाष्यादिग्रन्थेषु कृतभूरिपरिश्रमैः नागेशभट्टैरपि परमलघुमञ्जूषायां वैयाकरणसिद्धान्तलघुमञ्जूषायां वैयाकरणसिद्धान्तमञ्जूषायां लघुशब्देन्दुशेखरे बृहच्छब्देन्दुशेखरे च विस्तरेण प्रतिपादितम्। अत्र प्रबन्धे नागेशभट्टसम्मतम् अपादानस्वरूपं पूर्वोक्तग्रन्थदृष्ट्या विमृश्यते।

## १. गदाधरभट्टाभिमतापादानस्वरूपविचारः, अपादानपञ्चम्यर्थविचारश्च

तत्रादौ नैयायिकशिरोमणिगदाधररीत्या पञ्चम्यर्थः वितन्यते। गदाधरभट्टेन व्युत्पत्तिवादे कारकाणां निरूपणं कृतम् अस्ति। तत्र अपादानस्वरूपं प्रतिपादयितुं वदति– "अपादानत्वं च स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्य-विभागाश्रयत्वम्" [१] इति। अत्र स्वपदेन यत्रापादानत्वं चिकीर्षितं तद् ग्राह्यम्। भेदपदेनात्र विभागजनकीभूता या पतनादिक्रिया तादृशक्रियावान्नेत्याकारको ग्राह्यः, तच्च भेदः वृक्षे एव न तु पर्णे पर्णस्य विभागजनकीभूतक्रियाश्रयत्वात्,

---

* सहायकाध्यापकः, संस्कृतदर्शनविभागे, रामकृष्णमिशन्-विवेकानन्द-शेक्षणिक-शोध-संस्थाने, neerajbhu85@gmail.com

[१] व्युत्पत्तिवादः

अतः पर्णं तु तादृशक्रियावत्, वृक्षश्च तादृशक्रियाभाववान्, तथा च वृक्षात् पर्णं पतति इत्यादौ स्वं वृक्षः तन्निष्ठो भेदः विभागजनकीभूतक्रियावान् न इत्याकारकः क्रियावत्प्रतियोगिताको भेदः, तस्य प्रतियोगिता क्रियावति प्रतियोगितावच्छेदिका पतनादिक्रिया तज्जन्यो यो हि विभागः, तस्याश्रयो वृक्षः, अतस्तस्य अपादानत्वं सिध्यतीति भावः। एवमन्यत्रापि।

अत्र केवलं क्रियाजन्यविभागाश्रयत्वम् अपादानत्वम् इत्युक्ते पर्णस्यापि स्यादपादानत्वम्, विभागस्य संयोग इव उभयनिष्ठत्वेन वृक्षात् पर्णं पततीत्यादौ पतनक्रियाजन्यविभागस्याश्रयो वृक्षः पर्णं चेति। अतस्तद्वारणाय स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतत्वं क्रियायां विशेषणं प्रदत्तम्। एवं चात्र स्वपदेन पर्णस्य ग्रहणं नैव कर्तुं शक्यते तस्य विभागजनकक्रियाश्रयत्वेन तत्र क्रियावान् न इत्याकारकभेदस्यासत्त्वात्, अतः स्वपदेन वृक्ष एव ग्राह्यः, तथा च तस्यैवापादानत्वम् इति भावः। तथा चोक्तं गदाधरभट्टेन- “पर्णादेः स्वनिष्ठवृक्षादिविभागजनकस्वपतनाद्यपादानत्ववारणाय भूतान्तं क्रियाविशेषणम्”[२]।

गदाधरमते पञ्चम्यर्थस्तु भेदप्रतियोगितावच्छेदकत्वं विभागश्च। तथा चाह गदाधरः- “भेदप्रतियोगितावच्छेदकत्वे विभागे च पञ्चम्याः शक्तिद्वयम्”[३]। तत्र भेदे विभागे च प्रकृत्यर्थस्य निष्ठत्वसम्बन्धेनान्वयो भवति, पञ्चम्यर्थस्य प्रतियोगितावच्छेदकत्वस्य आश्रयत्वसम्बन्धेन विभागस्य च जनकत्वसम्बन्धेन क्रियायामन्वयो भवति। तथा च वृक्षात् पर्णं पततीत्यतः- वृक्षनिष्ठभेदप्रतियोगितावच्छेदकत्ववती वृक्षनिष्ठविभागजनिका या क्रिया तद्वत्पर्णम्, इत्याकारको बोधो भवति। परन्तु एवं सति वृक्षात् पर्णं पतति न स्वस्मात् इत्यादिवाक्याद्बोधानापत्तिः। यतो हि– अस्य वाक्यस्यार्थः स्यात् वृक्षनिष्ठभेदप्रतियोगितावच्छेदकत्ववती वृक्षनिष्ठविभागजनिका जनकत्वसम्बन्धावच्छिन्न-स्वनिष्ठविभागप्रतियोगिताकाभाववती या क्रिया तद्वत्पर्णम्, तच्च नैव सम्भवति, वृत्तिनियामकसम्बन्धस्यैव प्रतियोगितावच्छेदकत्वास्वीकारेण जनकत्वस्य च वृत्त्यनियामकतया प्रतियोगितावच्छेदकत्वासम्भवात्। अतः पक्षान्तरं प्रोक्तं गदाधरेण- “जनकतासम्बन्धस्य प्रतियोगितानवच्छेदकतया नञा तत्सम्बन्धावच्छिन्नविभागाभावः क्रियायां बोधयितुं न शक्यते इति

२ व्युत्पत्तिवादः
३ व्युत्पत्तिवादः

चेत् तर्हि विभागजनकत्वम् एव पञ्चम्यर्थोऽस्तु"[४]। एवं चास्मिन् पक्षे भेदप्रतियोगितावच्छेदकत्वं विभागजनकत्वं च पञ्चम्यर्थोऽस्तु। प्रकृत्यर्थस्य भेदे विभागे च निष्ठत्वसम्बन्धेनान्वयो भवतु, प्रतियोगितावच्छेदकत्वस्य विभागजनकत्वस्य च क्रियायामाश्रयत्वसम्बन्धेनान्वयो भवतु, तथा च वृक्षनिष्ठभेदप्रतियागितावच्छेदकत्ववती वृक्षनिष्ठविभागजनकत्ववती च या पतनक्रिया तद्वत्पर्णम्, इत्याकारको बोधो भवति।

एवं सति वृक्षात् पर्णं पतति न स्वस्मात्, इत्यादिवाक्याच्च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकत्ववती वृक्षनिष्ठविभागजनिका आश्रयत्व-सम्बन्धावच्छिन्नस्वनिष्ठविभागप्रतियोगिताकाभाववती या क्रिया तद्वत्पर्णम्, एतच्च सम्भवत्येव आश्रयत्वसम्बन्धस्य वृत्तिनियामकत्वस्वीकारात्। परन्तु एवं सति जिज्ञासात्र जायते वृक्षात्पर्णं पतति न स्वस्मात्, इत्यादौ पञ्चमीसमभिव्याहृतनञा भेदप्रतियोगितावच्छेदकत्वस्य विभागजनकत्वस्य चेति द्वयोः अभावद्वयं बोध्यते, अथवा यथासम्भवम् एकतरस्याभावः बोध्यते। तत्राद्यपक्षस्वीकारे वृक्षात्पर्णं पतति न स्वस्मात्, इति वाक्यात् वृक्षनिष्ठभेदप्रतियोगितावच्छेदकत्ववती वृक्षनिष्ठविभागजनिका आश्रयत्वसम्बन्धावच्छिन्नस्वनिष्ठभेदप्रतियोगितावच्छेदकत्वप्रतियोगिताका-भाववती च आश्रयत्वसम्बन्धा-वच्छिन्नस्वनिष्ठविभागजनकप्रतियोगिताका-भाववती या क्रिया तद्वत् पर्णम्, इत्यर्थो भविष्यति तच्च नैव सम्भवति पर्णनिष्ठक्रियायां स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावस्य सत्त्वेऽपि पर्णनिष्ठविभागजनकत्वाभावस्य तत्राभावात्। एवं वृक्षात् पर्णं पतति न भूतलात्, इति प्रयोगानापत्तिः। तथाहि– अस्य वाक्यस्यार्थो भविष्यति वृक्षनिष्ठभेदप्रतियोगितावच्छेदकत्ववती वृक्षनिष्ठविभागजनिका आश्रयत्वसम्बन्धावच्छिन्नभूतलनिष्ठभेदप्रतियोगितावच्छेदकत्वप्रतियोगिता-काभाववती च आश्रयत्वसम्बन्धावच्छिन्नभूतलनिष्ठविभागजनकप्रतियोगिता-काभाववती या क्रिया तद्वत् पर्णम्, तदपि न सम्भवति प्रकृते पतनक्रियायां भूतलनिष्ठविभागजनकत्वाभावस्य सत्त्वेऽपि भूतलनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावस्य तत्रासत्त्वात्।

नापि **द्वितीयपक्षः** – तथा सति वृक्षात् पर्णं पतति न पर्णात्, इत्यत्र बोधानापत्तिः। अस्य वाक्यस्य बोधः स्यात् वृक्षनिष्ठभेदप्रतियागितावच्छेदकत्ववती वृक्षनिष्ठविभागजनिका आश्रयत्व-सम्बन्धावच्छिन्नपर्णनिष्ठविभागजनकत्वप्रतियोगिताकाभाववती या क्रिया

[४] व्युत्पत्तिवादः

तद्वत् पर्णं, तच्च नैव सम्भवति पर्णनिष्ठक्रियायां पर्णनिष्ठविभागजनकत्व-सत्त्वेन तदभावस्य तत्रासत्त्वात्। वृक्षनिष्ठभेदप्रतियागितावच्छेदकत्ववती वृक्षनिष्ठविभागजनिका आश्रयत्वसम्बन्धावच्छिन्नपर्णनिष्ठविभागप्रति-योगिताकाभाववती या क्रिया तद्वत्पर्णम्, इति वा बोधो भविष्यति, तदपि नैव सम्भवति पर्णनिष्ठक्रियायां पर्णान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावस्य असत्त्वात्।

तस्मात् पञ्चम्यर्थः कः इति चेद् उच्यते– व्युत्पत्तिवादे गदाधरभट्टेन "विभागो जनकत्वं च पञ्चम्यर्थः"[५]। तत्र विभागे प्रकृत्यर्थस्य स्वावधिकत्वसम्बन्धेनान्वयः, प्रकृत्यर्थविशिष्टस्य विभागस्य च पञ्चम्यर्थे जनकत्वे निरूपितत्वसम्बन्धेनान्वयः, जनकत्वस्य च क्रियायाम् आश्रयत्व-सम्बन्धेनान्वयः, तथा च वृक्षात्पर्णं पततीत्यतः वृक्षावधिकविभागनिरू-पितजनकत्ववती या पतनक्रिया तद्वत्पर्णम्, इति बोधो जायते। वृक्षात् पर्णं पतति न स्वस्मात् इत्यस्य वृक्षावधिकविभागनिरूपितजनकत्ववती स्वावधिकविभागनिरूपितजनकत्वाभाववती या क्रिया तद्वत् पर्णम् इति। वृक्षात् पर्णं पतति न भूतलात् इत्यस्य वृक्षावधिकविभागनिरूपितजनकत्व-वती भूतलावधिकविभागनिरूपितजनकत्वाभाववती या क्रिया तद्वत्पर्णम्। वृक्षात्पर्णं पतति न पर्णात्, इत्यतः वृक्षावधिकविभागनिरूपितजनकत्ववती पर्णावधिकविभागनिरूपितजनकत्वाभाववती या क्रिया तद्वत्पर्णम्।

## २. अत्र शाब्दबोधः, पञ्चम्यर्थस्यान्वयप्रकारश्च

'चैत्रः ग्रामाद् गच्छति' इत्यत्र गमिधातोः संयोगः पादविक्षेपादिव्यापारश्चार्थः। अत्र ग्रामपदोत्तरपञ्चमीविभक्तेरर्थो विभागः जनकत्वञ्चेति। तत्र विभागे प्रकृत्यर्थस्य ग्रामस्य स्वावधिकत्वसम्बन्धेनान्वयः, प्रकृत्यर्थविशिष्टविभागस्य च जनकत्वे निरूपितत्वसम्बन्धेनान्वयः। जनकत्वस्य क्रियायाम् आश्रयत्वसम्बन्धेनान्वयः। धात्वर्थफलस्य व्यापारे जनकत्वसम्बन्धेनान्वयः। व्यापारस्य तिबर्थकृतौ जनकत्वसम्बन्धेनान्वयः। तिबर्थकृतेश्च प्रथमान्तार्थे चैत्रे आश्रयत्वसम्बन्धेनान्वयः। ततश्च निरुक्तवाक्यात् ग्रामावधिकविभागजनकताश्रयो यः संयोगानुकूलव्यापारः तदनुकूलकृतिमान् चैत्रः– इति बोधो भवति।

## २.१. अत्र परमलघुमञ्जूषा

तत्र तावत् किं नाम अपादानत्वम् इति जिज्ञासायां परमलघुमञ्जूषायाम्

---

[५] व्युत्पत्तिवादः

अपादानस्य लक्षणं वदति नागेशभट्टः "तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृत-धात्ववाच्यविभागाश्रयत्वम् अपादानत्वम्"[६]। अर्थात् तत्तत्कर्तृसमवेता या तत्तत्क्रिया तत्तत्क्रियाजन्यः प्रकृतधात्ववाच्यो यो हि विभागः तदाश्रयत्वम् अपादानत्वम् इति। यथा रामो वनाद् गच्छतीत्यादौ वनादेः अपादानत्वं बोध्यम्। तथाह्यत्र कर्ता रामः तस्मिन् समवेता समवायसम्बन्धेन वर्तमाना गमिधातुवाच्यक्रिया उत्तरदेशसंयोगानुकूला पादविक्षेपादिव्यापाररूपा क्रिया तज्जन्यः प्रकृते प्रतीयमानो यो हि विभागः स च प्रकृतगमिधात्ववाच्योऽपि विभागस्य गमिधात्ववाच्यत्वात् तदाश्रयत्वं च वनस्यास्तीति भवति तत्रापादानलक्षणसमन्वयः। एवम् एवान्यत्रापि बोध्यम्।

अथ तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यविभागाश्रयत्वम् अपादानत्वम् इत्येतावदुक्तौ रामो वनाद् गच्छतीत्यादौ वनादेः कर्तृभूतरामादिनिष्ठोत्तरदेश-संयोगानुकूलव्यापारजन्यविभागाश्रयत्वस्य सत्त्वेन अपादानत्वसिद्धौ तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यविभागाश्रयत्वम् इत्येवापादानस्य लक्षणम् अस्तु किमर्थं विभागे प्रकृतधात्ववाच्यत्वविशेषणम् इति चेद् उच्यते तद्विशेषणादाने खगः वृक्षं त्यजतीत्यादौ वृक्षस्य कर्तृभूतखगनिष्ठ-विभागानुकूलव्यापारजन्यविभागाश्रयत्वाद् अपादानत्वं स्यात्। अत्र च वृक्षस्यापादानत्वं नेष्टम्, अतोऽत्र दोषवारणाय विभागे प्रकृतधात्व-वाच्यत्वविशेषणं प्रदत्तम् इति। तद् आह नागेशः "वृक्षं त्यजति खग इत्यादावपादानत्ववारणाय प्रकृतधात्ववाच्येति"[७]।

दाने चोक्तविशेषणे खगः वृक्षं त्यजतीत्यादौ त्यजतिधातोः विभागानुकूलव्यापारार्थकत्वेन वृक्षस्य विभागाश्रयत्वेऽपि तस्य विभागस्य प्रकृतत्यजिधातुवाच्यत्वात् वृक्षस्य नापादानत्वम्, तस्य प्रकृतधात्ववाच्यविभागाश्रयत्वाभावात्। एवञ्च यत्र विभागो धात्ववाच्यः, तत्र तदाश्रयस्य अपादानत्वं भवति यथा वनाद् गच्छतीत्यादौ। यत्र च विभागो धातुवाच्यः, तत्र तदाश्रयस्य कर्मत्वं भवति यथा वृक्षं त्यजतीत्यादौ। एवं धातुवाच्यविभागाश्रयस्य अपादानत्ववारणाय प्रकृतधात्ववाच्यत्वविशेषणं प्रदत्तम् इति भावः।

अथ क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वम् अपादानत्वम् इत्येवास्तु किमर्थं क्रियायां तत्तत्कर्तृसमवेतत्वविशेषणम् इति चेद् उच्यते

---

६ परमलघुमञ्जूषायां कारकार्थनिरूपणप्रकरणे।

७ परमलघुमञ्जूषायां कारकार्थनिरूपणप्रकरणे

क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वम् इत्येवोच्यमाने "परस्परस्मात् मेषौ अपसरतः" इत्यत्र परस्परशब्दवाच्यस्यापादानत्वं मेषशब्दवाच्यस्य कर्तृत्वम् इति व्यवस्था न स्यात्। अत्र हि उभयकर्मजविभागः उभयकर्मजविभागस्थले च विभाग उभयनिष्ठक्रियाजन्यो भवति। तथा च प्रकृते परस्परशब्दवाच्योऽपि मेष एव मेषशब्दवाच्योऽपि मेष एव। एवञ्चोभयशब्दवाच्ययोः मेषयोः प्रकृतसृधातुवाच्यक्रियाश्रयत्वात्कर्तृत्वं प्राप्तम्। किञ्चोभयनिष्ठक्रियाजन्यप्रकृतसृधात्ववाच्यो यो विभागः तदाश्रयावपि उभौ तस्मात्तयोः अपादानत्वम् अपि प्राप्तम्। तथा चोभयोः कर्तृत्वापादानत्वयोः युगपत्प्रसक्तौ "अपादानम् उत्तराणि कारकाणि बाधन्ते" इति नियमेनोभयोः कर्तृत्वम् एव स्यान्नतु अपादानत्वम्, तथा चोक्तवाक्यस्य सिद्धिर्न स्यात्। अतस्तदर्थं तत्तत्कर्तृसमवेतत्वविशेषणं देयम् इति। तद् आह नागेशः– "परस्परस्मान्मेषावपसरत इत्यत्रापादानत्वाय तत्तत्कर्तृ"[८]। दाने चोक्तविशेषणे तत्कर्ता प्रथममेषः तत्समवेतक्रियाजन्यप्रकृतसृधात्ववाच्यो यो हि विभागः तदाश्रयः अपरमेषः। एवं तत्कर्ता अपरमेषः तत्समवेतक्रियाजन्यप्रकृतसृधात्ववाच्यो यो हि विभागः तदाश्रयः प्रथममेषः। एवञ्चोभयोरपि मेषयोः स्वक्रियां प्रति कर्तृत्वम्, अपरस्य क्रियां प्रति च अपादानत्वं प्राप्तम्। तथा च मेषपदवाच्ययोः कर्तृत्वं विवक्षितम्, परस्परपदवाच्ययोः अपादानत्वं विवक्षितम्, तेन निरुक्तप्रयोगः सिध्यति। तद् आह नागेशः "तत्तत्पशुविशेषनिष्ठव्यापारजन्यविभागाश्रयस्तत्तत्पशुविशेषः"[९]। तथा च मेषान्तरसमवेतक्रियाजन्यविभागाश्रयत्वात् मेषान्तरस्यापादानत्वम्. स्वसमवेतक्रियाश्रयत्वाच्च कर्तृत्वम् इति। तथा च परस्परपदवाच्ययोः विभागाश्रयत्वविवक्षया अपादानत्वम् मेषपदवाच्ययोः व्यापाराश्रयत्वविवक्षया कर्तृत्वं सिध्यति। अतो भवति परस्परस्मान्मेषावपसरतः इति वाक्यम्। अथैवम् अपि मेषशब्दवाच्यौ यौ पशुविशेषौ तावेव परस्परशब्दवाच्याविति तयोरभिन्नत्वेन मेषपदवाच्ययोः क्रियाश्रयत्वेन परस्परपदवाच्ययोरपि क्रियाश्रयत्वात् उभयपदवाच्ययोः कर्तृत्वम् अपि प्राप्तं तथा चोभयोः कर्तृत्वमेव स्यान्नतु अपादानत्वम् अपि अपादानम् उत्तराणि कारकाणि बाधन्ते इति न्यायस्य सत्त्वादिति तु नैव वक्तव्यम्। यतो हि शब्दरूपोपाधिभेदेन मेषपदवाच्यपरस्परपदवाच्ययोः

[८] परमलघुमञ्जूषायां कारकार्थनिरूपणप्रकरणे

[९] परमलघुमञ्जूषायां कारकार्थनिरूपणप्रकरणे

भेदस्य सत्त्वान्नैकस्मिन् कर्तृत्वापादानत्वयोः प्रसङ्गः इति न कर्तृसंज्ञया अपादानसंज्ञायाः बाधावसर इति भावः। तद् आह नागेशः-"किं च मेषपदवाच्ययोः पशुविशेषयोः क्रियाश्रयत्वविवक्षा परस्परपदवाच्ययोस्तु विभागाश्रयत्व-विवक्षेत्यौपाधिकस्तयोर्भेदः" [१०] ।

अथ प्रकृते शब्दरूपोपाधिभेदेन अर्थयोः भेदं सम्पाद्य व्यवस्था कृता, तत्तु नैव सम्भवति उपाधिभेदेन अर्थयोः परस्परं भेदस्वीकारे मानाभावादिति त्वत्र नैव वक्तव्यम्, "उपाधिश्च कार्यानन्वयी व्यावर्तको वर्तमानश्च" इति तल्लक्षणेन विशेषणवदुपाधेरपि व्यावर्तकत्वेन उपाधिभेदेन भेदस्य स्वीकृतत्वात्। यथा एकम् एव चैतन्यम्, विषयान्तःकरणान्तःकरणवृत्तिरूपोपाधित्रैविध्यात् त्रिविधं भवति। तथा चोक्तं वेदान्तपरिभाषायां "तथाहि त्रिविधं चैतन्यं प्रमातृचैतन्यं प्रमाणचैतन्यं विषयचैतन्यं चेति। तत्र घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम्, अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्, अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्"। यथा एकैवाकाशः घटमठाद्युपाधिभेदेन घटाकाशः मठाकाशः इत्यादिनानारूपेण भिद्यते। यथा च आत्मा आत्मना आत्मानं वेत्तीत्यादौ एकम् एव चैतन्यम् उपाधिभेदेन भिद्यते। अतस्तदेव कर्ता भवति करणं भवति कर्म च भवति। तत्र शरीरावच्छिन्नं कर्तृ, अन्तःकरणावच्छिन्नं करणं, निरवच्छिन्नं कर्म चास्ति। अत एव प्राह नागेशः "यथा आत्मात्मानमात्मना वेत्तीत्यादौ शरीरावच्छिन्नं कर्तृ अन्तःकरणावच्छिन्नं करणं निरवच्छिन्नं कर्म। एवम् एव शब्दरूपोपाधिभेदेनापि अर्थः भिद्यते तस्मात् भवति निरुक्तप्रयोगस्य सिद्धिः। अत एव च चैत्रमैत्रौ अन्योन्यम् आश्लिष्यतः इत्यादौ अपि बोध्यम्" [११] । एवम् एवान्यत्रापि बोध्यम्।

किञ्च वैयाकरणनये शब्दविशिष्ट एवार्थः प्रतीयते नतु केवलार्थः तस्माच्छब्दस्तु विशेषणम् एवातः तस्य तु व्यावर्तकत्वं स्वीकर्तव्यम् एव। प्रोक्तं च हरिणा वाक्यपदीये–

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते।
अनुविद्धम् इव ज्ञानं सर्वं शब्देन भासते॥
ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानाम् एते पृथग् अवस्थिते॥

---

१० परमलघुमञ्जूषायां कारकार्थनिरूपणप्रकरणे

११ परमलघुमञ्जूषायां कारकार्थनिरूपणप्रकरणे।

विषयत्वम् अनादृत्य शब्दैर्नार्थः प्रकाश्यते।

अथ औपाधिकं भेदम् अङ्गीकृत्य "परस्परस्मात् मेषौ अपसरतः" इत्यादौ परस्परशब्दवाच्यस्य विभागाश्रयत्वविवक्षया अपादानत्वम्, मेषशब्दवाच्यस्य क्रियाश्रयत्वविवक्षया कर्तृत्वम् एवं प्रकारेण कर्तृत्वापादानत्वयोः साधनेन प्रोक्तवाक्यानां सिद्धौ लक्षणे क्रियायां तत्तत्कर्तृसमवेतत्वविशेषणं व्यर्थम्। क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वम् अपादानत्वम् इत्येतावन्मात्रोक्तावपि अदोषात्। यतो हि परस्परशब्दवाच्यमेषपदवाच्ययोरैक्यम् आदाय तस्य विभागाश्रयत्वेनापादानत्वप्राप्तौ व्यापाराश्रयत्वेन च कर्तृत्वप्राप्तौ अपादानम् उत्तराणि कारकाणि बाधन्ते इति न्यायात्कर्तृत्वम् एव स्यात् अतस्तत्सिद्ध्यर्थं प्रोक्तविशेषणं प्रदत्तम्। किन्तु अत्र तु विभागाश्रयत्वं परस्परपदवाच्यस्य नतु मेषपदवाच्यस्य तस्मात्परस्परवाच्यस्यापादानत्वं प्राप्तं नतु कर्तृत्वम् अपि, एवम् एव मेषपदवाच्यस्य व्यापाराश्रयत्वं नतु परस्परपदवाच्यस्य तस्मात् तस्य कर्तृत्वम् एव प्राप्तं नतु अपादानत्वम् अपि। एवञ्च युगपत् कर्तृत्वापादानत्वयोरप्रसक्तौ अपादानम् उत्तराणि कारकाणि बाधन्ते इति न्यायस्यावसराभावात् बाध्यबाधकभावस्य अप्रसङ्गेन स्वत एव कर्तृत्वापादानत्वसिद्धौ तत्तत्कर्तृसमवेतविशेषणस्यापेक्षा नास्ति। अतः किमर्थं तद् उपात्तम् इति चेद् उच्यते "पर्वतात् पततोऽश्वात् पतति अश्ववाहः" इत्यादौ अश्वस्यापादानत्वाय तत्तत्कर्तृसमवेतत्वविशेषणम् इति। अयम्भावः– अत्र तत्तत्कर्तृसमवेतत्वादाने सति क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वम् अपादानत्वम् इत्येव लक्षणं स्यात् तथा च पर्वतात् पततोऽश्वात् पतति अश्ववाहः इत्यादौ एका एव पतनक्रिया, सा च अश्वे अश्ववाहे च तिष्ठति तज्जन्यप्रकृतपततिधात्ववाच्यविभागाश्रयः पर्वतो वर्तते तस्मात्तस्यापादानत्वसिद्धावपि अश्वस्य अपादानत्वं न स्यात्। तथाहि यथा ग्रामादायाति देवदत्तः इत्यादौ विभागस्य द्विष्ठत्वेन देवदत्तोऽपि विभागाश्रयः किन्तु स व्यापाराश्रयोऽपि, अतो व्यापाराश्रयत्वात् तस्य कर्तृसंज्ञैव भवति परत्वात् नतु अपादानसंज्ञापि, तथैवात्रापि अश्वस्य विभागाश्रयत्वेऽपि व्यापाराश्रयत्वात् कर्तृत्वम् एव स्यात् नतु अपादानत्वम् अपि, अतस्तत्सिद्ध्यर्थं तत्तत्कर्तृसमवेतत्वविशेषणविशिष्टं लक्षणं कृतम्। तेन च प्रकृते अश्वरूपकर्तृसमवेतक्रियाजन्यप्रकृतपततिधात्ववाच्यविभागाश्रयः पर्वतो वर्तते अश्वश्च व्यापाराश्रयो वर्तते तस्मात् अश्वीयपतनं प्रति पर्वतः अपादानम् अश्वश्च कर्ता। एवम्

अश्ववाहरूपकर्तृसमवेतक्रियाजन्यप्रकृतपततिधात्ववाच्यविभागाश्रयः अश्वो वर्तते व्यापाराश्रयश्च अश्ववाहो वर्तते तस्मात् अश्ववाहीयपतनं प्रति अश्वः अपादानम् अश्ववाहश्च कर्ता। एवञ्चात्र अश्वस्य पतनं प्रति कर्तृत्वं प्राप्तम् अश्ववाहीयपतनं प्रति च अपादानत्वं प्राप्तम् अतोऽत्र कर्तृत्वनिरूपकं भिन्नं वर्तते अपादानत्वनिरूपकं च भिन्नं वर्तते अतो निरूपकभेदादत्र द्वयोः संज्ञयोः समावेश एव भवति नतु बाध्यबाधकभावः। तेन च कर्तृत्वात् पततः इत्यत्र शतृप्रत्ययः सिध्यति अपादानत्वाच्च अश्वात् इत्यत्र पञ्चमी सिध्यति।

## २.२. अत्र वैयाकरणसिद्धान्तलघुमञ्जूषा

वैयाकरणसिद्धान्तलघुमञ्जूषायां वदति नागेशभट्टः "तस्माद् अवधिभावोपगमातिरिक्तावधित्वोपयोगिव्यापारानाश्रयत्वे सति इति वक्तव्यम् अयम् एव ध्रुवपदार्थः। अपाये गतिवेशेषे सत्युक्तध्रुवत्वम् अपादानम् इति सूत्रार्थः"[१२]। एवञ्च गतिविशेषे सति अवधित्वेन विवक्षितत्वे सति अवधिभावोपगमातिरिक्तस्य अवधिताप्रयोजकप्रकृतधात्वर्थस्य व्यापारस्य अनाश्रयत्वम् अपादानत्वम् इति लक्षणं प्रतिफलतीति भावः।

अथैवं लक्षणस्य स्वीकारे सति "परस्परस्मात् मेषौ अपसरतः" इत्यत्र परस्परपदवाच्ययोरपादानत्वं न स्यात् तथा च परस्परस्मात् इत्यत्र पञ्चमी न स्यात्। यतो हि अत्र मेषपदवाच्ययोरेव परस्परशब्दार्थतया तयोः मेषयोः च अवधित्वोपयोगिव्यापारस्यानाश्रयत्वं नास्ति किन्तु आश्रयत्वम् एव वर्तते तथा च अवधित्वोपयोगिव्यापारस्यानाश्रयत्वाभावात् परस्परपदवाच्ययोः ध्रुवत्वं न स्यात् तथा चापादानत्वस्यासिद्धिः सुस्पष्टैवेति भावः, तथा च परस्परस्मात् मेषौ अपसरतः, इति कथं प्रयोग इति चेद् उच्यते यथा "आत्मा आत्मना आत्मानं हन्ति" इत्यादौ एकम् एव चैतन्यं शरीराद्युपाधिभेदेन भिद्यते ततश्च एकस्मिन्नेव कर्तृत्वं करणत्वं कर्मत्वं च सिध्यति। एवञ्च तत्र शरीरावच्छिन्नं कर्तृ, अन्तःकरणावच्छिन्नं करणम्, निरवच्छिन्नं कर्म, इत्येवं प्रकारेण व्यवस्था शास्त्रेषु कल्पिता वर्तते। तद्वत्प्रकृते शब्दभेदादर्थभेद इति नियमेन शब्दरूपोपाधिकृतभेदमादाय परस्परशब्दवाच्यमेषशब्दवाच्ययोः भेदो बोध्यः। एवं प्रकारेण भेदम् उपपाद्य मेषपदवाच्ययोः व्यापाराश्रयत्वविवक्षायां कर्तृत्वम्, परस्परपदवाच्ययोः व्यापाराश्रयत्वाविवक्षायां विभागाश्रयत्वविवक्षायां च ध्रुवत्वम् उपपाद्य अपादानत्वं बोध्यम्। तथा च भवति तादृशप्रयोगसिद्धिः। अत एव वदति

१२ वैयाकरणसिद्धान्तलघुमञ्जूषायां सुबर्थप्रकरणे

नागेशः- "न च परस्परस्मान्मेषावपसरतः इत्यत्र दोष इति वाच्यम्। तत्र मेषपदोपात्तयोरेव क्रियाश्रयत्वं परस्परपदोपात्तयोर्विभागाश्रयत्वम् एवेत्यदोषात्। अत एव देवदत्तयज्ञदत्तौ अन्योन्यमाश्लिष्यत इत्यादौ तयोः कर्मत्वसिद्धिः। अन्यथा परत्वात् कर्तृत्वम् एव स्यात्। आत्मानमात्मना हन्तीत्यादावन्तःकरणाद्युपाधिभेदवत्प्रकृते शब्दरूपोपाधिभेदेन भेदः, शब्दालिङ्गितार्थस्यैव भानात्"[१३]।

## २.३. अत्र वैयाकरणसिद्धान्तमञ्जूषा

वैयाकरणसिद्धान्तलघुमञ्जूषायाम् अपादानस्य स्वरूपं प्रतिपादयितुम् अपादानसंज्ञाविधायकस्य सूत्रस्य व्याख्यानप्रसङ्गे वदति नागेशभट्टः "अपाय इति चावर्तते, अन्वेतीति चाध्याह्रियते, तेनापायान्वयि यदपाये ध्रुवं गतिरूपापायानाश्रयः, तद् अपादानम् इति तदर्थः। एवञ्च व्यापारतावच्छेदकसम्बन्धेन विभागजनकप्रकृतधातूपात्ततत्क्रियानाश्रयत्वे सति आश्रयतया तदुपात्तविश्लेषान्वयि तद् अपादानम् इति फलितम्"[१४]। एवञ्च व्यापारतावच्छेदकसम्बन्धेन विभागजनकप्रकृतधातूपात्ततत्क्रियानाश्रयत्वे सति आश्रयतया तदुपात्तविश्लेषान्वयित्वम् अपादानत्वम् इति लक्षणं सिध्यति। यथा वृक्षात् पत्रं पततीत्यादौ व्यापारतावच्छेदकसम्बन्धेन विभागजनकप्रकृतधातूपात्ततत्क्रियाश्रयभूतं पत्रं वर्तते, तादृशव्यापारानाश्रयभूतः, आश्रयतया तद्वाच्यविभागस्यान्वयी च वर्तते वृक्षः, अतस्तस्यापादानसंज्ञा भवति। एवमन्यत्रापि बोध्यम्।

अत्र आश्रयतया तदुपात्तविश्लेषान्वयित्वम् अपादानत्वम् इति लक्षणं प्रोच्यते चेत् "देवदत्तः प्रयागात् काशीं गच्छति" इत्यत्र प्रयाग इव देवदत्तोऽपि विभागाश्रयो वर्तते संयोगवद्विभागस्याऽपि द्विष्ठत्वात्। अतो देवदत्तस्यापि प्रयागवदपादानत्वापत्तिः। अतस्तद्वारणाय व्यापारतावच्छेदकसम्बन्धेन विभागजनकप्रकृतधातूपात्ततत्क्रियानाश्रयत्वे सति, इति सत्यन्तविशेषणं प्रदत्तं लक्षणे, तथा च न दोषः। देवदत्तस्य गमिधातूपात्तविश्लेषान्वयित्वेऽपि व्यापारतावच्छेदकसमवायसम्बन्धेन विभागजनकप्रकृत-गम्धातूपात्तक्रियानाश्रयत्वाभावात्। तथा च वदति नागेशभट्टः मञ्जूषायां सुबर्थप्रकरणे– "कर्तृवारणाय सत्यन्तम्"।

[१३] वैयाकरणसिद्धान्तलघुमञ्जूषायां सुबर्थप्रकरणे
[१४] वैयाकरणसिद्धान्तमञ्जूषायां सुबर्थविचारे

अत्र व्यापारतावच्छेदकसम्बन्धेन विभागजनकतत्क्रियानाश्रयत्वे सति आश्रयतया तदुपात्तविश्लेषान्वयित्वम् अपादानत्वम् इति लक्षणस्वीकारे तु धावतः अश्वात् अश्ववाहः पततीत्यत्र अश्वस्य अपादानसंज्ञा न स्यात्, तस्य विभागाश्रयत्वेऽपि व्यापारतावच्छेदकसम्बन्धेन विभागजनकधावतिधातुवाच्यव्यापाराश्रयत्वात् इति, अत एतद्दोषवारणाय प्रकृतधातूपात्तेति विशेषणं प्रदत्तं लक्षणे। एवञ्च न दोषः, अश्वस्य धावतिधातुवाच्यव्यापाराश्रयत्वेन तद्वाच्यक्रियां प्रति अवधित्वाभावेन तं प्रति अपादानत्वाभावेऽपि प्रकृतपततिधातुवाच्यव्यापारस्य अनाश्रयस्तु धावनविशिष्टोऽपि अश्वो वर्तते, किञ्च तादृशव्यापारजन्यविभागाश्रयोऽपि वर्तते धावनविशिष्टोऽश्वः। अतः पततिधातुवाच्यक्रियां प्रति धावनविशिष्टोऽश्व एवावधिः। तस्मात् तत्क्रियां प्रति भवत्येव अश्वस्य अपादानसंज्ञा। तथा चाह नागेशभट्टः तत्र "धावतोऽश्वात् पतति, कुड्यात् पततोऽश्वात् पतति इत्यादिसंग्रहाय प्रकृतधातूपात्तेति"[१५]।

अत्र व्यापारतावच्छेदकसम्बन्धेन विभागजनकप्रकृतधातूपात्तक्रियानाश्रयत्वे सति आश्रयतया तदुपात्तविश्लेषान्वयित्वम् अपादानत्वम् इत्येव प्रोच्यमाने परस्परान्मेषावपसरतः, इत्यादीनां सिद्धिर्न स्यात्। तथाहि प्रकृते उभावपि मेषौ यद्यपि सृधातूपात्तविश्लेषान्वयिनौ स्तः, किन्तु उभावपि व्यापारतावच्छेदकसमवायसम्बन्धेन विभागजनकप्रकृतसृधातूपात्तक्रिया-श्रयावपि, अतः व्यापारतावच्छेदकसम्बन्धेन विभागजनकप्रकृतधातूपात्त-क्रियानाश्रयत्वाभावात् न स्याद् अपादानत्वम् इति भावः। एतद्दोषनिरासाय क्रियायां तत्त्वं निवेशितम्। तथा च परस्परान्मेषावपसरतः इत्यत्र न दोषः।

**२.४. अत्र लघुशब्देन्दुशेखरः**

ध्रुवमपायेऽपादानम् इति सूत्रस्य अपाये गतिविशेषे सति यद् ध्रुवम् तद् अपादानम् इत्यर्थो वर्तते। ध्रुवत्वञ्च अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयत्वम्। तथा च "अपाये गतिविशेषे सति यद्ध्रुवमवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयम् अपादानम्"[१६] इति लक्षणं समायाति शेखरानुसारं नागेशनये। अत्र अवधिभावोपगमाश्रयत्वे सतीत्यस्य अवधित्वेन विवक्षितत्वे सतीत्यर्थो वर्तते। तदतिरिक्तस्य इत्यस्य अवधिभावोपगमातिरिक्तस्य इत्यर्थो वर्तते अवधित्वोपयोगिव्यापारस्य

[१५] वैयाकरणसिद्धान्तमञ्जूषायां सुबर्थविचारे

[१६] लघुशब्देन्दुशेखरे ध्रुवमपायेऽपादानम् इति सूत्रे

इत्यस्य च अवधिताप्रयोजकप्रकृतधात्वर्थस्य इत्यर्थो वर्तते। तथा च गतिविशेषे सति अवधित्वेन विवक्षितत्वे सति अवधिभावोपगमातिरिक्तस्य अवधिताप्रयोजकप्रकृतधात्वर्थस्य व्यापारस्य अनाश्रयत्वम् अपादानत्वम् इत्यर्थो भवति। यथा वृक्षात् पर्णं पततीत्यादौ वृक्षादेः। अत्र प्रकृतपततिधातोः अधःसंयोगानुकूलव्यापारो वाच्यः। एवञ्च तस्मिन् सति अवधित्वेन विवक्षितोऽस्ति वृक्षः, अवधिभावोपगमातिरिक्तावधिताप्रयोजकप्रकृतधात्वर्थो व्यापारः, अधःसंयोगा-नुकूलव्यापारः तस्य अनाश्रयोऽपि वृक्षो वर्तते, अतस्तस्या-पादानत्वं सिध्यति। ततश्च तत्र पञ्चमी सिध्यति। एवम् एव धावतोऽश्वात् पततीत्यादौ पर्वतात् पततः अश्वात् पततीत्यादौ च बोध्यम् इति भावः।

**२.५. अत्र बृहच्छब्देन्दुशेखरः**

अत्र ग्रन्थे ध्रुवमपायेऽपादानम् इति सूत्रस्य ध्रुवम् इत्यस्य स्थिरमित्यर्थः, अपायपदस्य च विभागजनकव्यापार इत्यर्थः। अत एव श्रीमान् नागेशभट्टः प्राह "ध्रुवं स्थिरम्। अपायः, विभागजनकव्यापारः" [१७]। ततश्च प्रकृतसूत्रस्यार्थं प्राह श्रीमान् नागेशभट्टः "एवञ्च अपाये तद्विषये, ध्रुवं प्रकृतव्यापाररहितम्, कारकम्, प्रत्यासत्त्या प्रकृतविभागाश्रयस्तदपादानम्" [१८] इति। अन्यत्सर्वं लघुशब्देन्दुशेखरवदेव बोध्यम्।

**३. अत्रायं विशेषः**

तत्र तावत् परमलघुमञ्जूषायाम् अपादानस्य लक्षणं वर्तते "तत्तत्कर्तृसमवेत-तत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वम् अपादानत्वम्।" एवञ्च, एतल्लक्षणानुसारम् अपादानं प्रकृतधात्ववाच्यविभागाश्रयो भवति। शेखरे च वदति नागेशः "अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमाना-धिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोद्धयम्।" एवञ्च शेखरानुसारं प्रतिभाति यदपादानं प्रकृतधातुवाच्यविभागाश्रयो भवति। एवञ्च उभयोः ग्रन्थयोः विरोध इति तु नात्र शङ्कनीयम्। यतो हि परमलघुमञ्जूषोक्ते धात्ववाच्येति पदस्य धातुवाच्यफलतावच्छेदकसम्बन्धावच्छिन्नफलेतर इत्यर्थः।

एवञ्च परमलघुमञ्जूषानुसारं लक्षणं भवति तत्तत्कर्तृसमवेततत्तत्क्रियाजन्य-प्रकृतधातुवाच्यफलतावच्छेदकसम्बन्धावच्छिन्नफलेतरविभागाश्रयो यः तद्

---

[१७] बृहच्छब्देन्दुशेखरे ध्रुवमपायेऽपादानम् इति सूत्रे

[१८] बृहच्छब्देन्दुशेखरे ध्रुवमपायेऽपादानम् इति सूत्रे

अपादानम् इति। अत एतल्लक्षणानुसारम् अपि अपादानलक्षणे विभागो धात्ववाच्यो ग्राह्य इति नैव समायाति। तस्मान्नास्ति उभयोः ग्रन्थयोः मध्ये विरोध इति भावः।

**४. अत्र निष्कर्षः**

"तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधातुवाच्यफलतावच्छेदकसम्बन्धावच्छिन्नफलेतरविभागाश्रयो यः तद् अपादानम्" इति लक्षणं परमलघुमञ्जूषानुसारं समायाति। वैयाकरणसिद्धान्तलघुमञ्जूषानुसारं "गतिविशेषे सति अवधित्वेन विवक्षितत्वे सति अवधिभावोपगमातिरिक्तस्य अवधिताप्रयोजकप्रकृतधात्वर्थस्य व्यापारस्य अनाश्रयत्वम् अपादानत्वम्" इति लक्षणं प्रतिफलति। वैयाकरणसिद्धान्तमञ्जूषानुसारं "व्यापारतावच्छेदकसम्बन्धेन विभागजनकप्रकृतधातूपात्ततत्क्रियानाश्रयत्वे सति आश्रयतया तदुपात्तविश्लेषान्वयित्वम् अपादानत्वम्" इति लक्षणं सिध्यति। लघुशब्देन्दुशेखरानुसारञ्च "गतिविशेषे सति अवधित्वेन विवक्षितत्त्वे सति अवधिभावोपगमातिरिक्तस्य अवधिताप्रयोजकप्रकृतधात्वर्थस्य व्यापारस्य अनाश्रयत्वम् अपादानत्वम्" इति लक्षणं समायाति। बृहच्छब्देन्दुशेखरदृष्ट्या 'एवञ्च अपाये तद्विषये, ध्रुवं प्रकृतव्यापाररहितम्, कारकम्, प्रत्यासत्त्या प्रकृतविभागाश्रयस्तदपादानम्' इति लक्षणं समायाति। एतेषु सर्वेष्वपि लक्षणेषु दोषरहितत्वं विद्यते। तस्मात् चत्वार्यपि लक्षणानि सिद्धान्तभूतानि सन्ति। एतानि लक्षणानि च ध्रुवमपायेऽपादानम् इति सूत्रस्यैव तात्पर्यभूतानीति बोध्यम्।

✶ ✶ ✶

## Bibliography


1. *Paramalaghumañjūṣā (Vaṃśī-ṭīkāyutā)*; Nāgeśabhaṭṭa; Vaṃśīdhara Śarmā (comm.); Śrīnivāsa Śarmā (ed.); Caukhamba Vidyabhavan; Benaras; 2006
2. *Bṛhacchabdenduśekharaḥ*; Nāgeśabhaṭṭa; Sītārāma Śāstrī (ed.); Sampurnanand Sanskrit University; Benaras; 1996
3. *Laghuśabdenduśekharaḥ*; Nāgeśabhaṭṭa; Vaikuṇṭhanātha Śāstrī (comm.); Śivaprasāda Śarmā & Śrīnivāsa Śarmā (eds.); Chowkhamba Surabharati Praksahan; Benaras; 2006

4. *Vyutpattivādaḥ*; Gadādharabhaṭṭācārya; Veṇīmādhava Śāstrī (comm.); Rājanārāyaṇa Śukla (ed.); Chowkhamba Samskrita Bhavan; Benaras; 2006
5. *Vaiyākaraṇasiddhāntamañjūṣā*; Nāgeśabhaṭṭa; Kālikā Prasāda Śukla (ed.); Sampurnanand Sanskrit University; Benaras; 1977
6. *Vaiyākaraṇasiddhāntalaghumañjūṣā*; Nāgeśabhaṭṭa; Sabhāpati Śarmā Upādhyāya (comm.); Chowkhamba Samskrita Pratishthan; Benaras; 2006



# शब्दार्थरत्ने शब्दसाधुत्वप्रसङ्गविचारः

सुदीप-मण्डलः *

**Abstract**

[*Tārānātha-tarkavācaspati-bhaṭṭācārya*, an eminent scholar, is best known for his *magnum opus, Vācaspatyam*– a six-volume encyclopaedia of *Saṃskṛta* words. He was savant in almost all the branches of Hindu philosophy and the technical subjects like grammar, etc. He played a vital role in popularising the *Pāṇiniya* system in Bengal by writing the commentary *Saralā* on *Siddhāntakaumūdī*. One of his lesser-known texts is *Śabdārtharatna* that deals with grammatical philosophy. There he discussed a lot about *sādhutva* (correctness) of words. The discussion is summarised in this paper, along with critical and comparative remarks.]

## ०. उपोद्घातः

पाणिनीयव्याकरणशास्त्रेण यथा असाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते तथैव भाषायाः दार्शनिकं तत्त्वम् अपि प्रतिपाद्यते। मानवबुद्ध्या सम्पन्नेषु आश्चर्यप्रदायकेषु बृहत्स्मृतिस्तम्भेष्वेका अष्टाध्यायी इत्यत्र नास्ति सन्देहः। बङ्गप्रदेशे सप्तदशशतके अष्टादशशतके वा पाणिनीयव्याकरणस्य चर्चा तथा नासीत्। परन्तु ऊनविंशशतकस्य प्रारम्भे पण्डितवर्गैः शोधच्छात्रैः वा पाणिनीयव्याकरणमाश्रित्य सम्यक् कार्यमारब्धम्। तेषु आचार्यः तारानाथतर्कवाचस्पतिः अन्यतमः। स ईश्वरचन्द्रविद्यासागरस्य सुहृदपि आसीत्। तस्य प्रतिभा बहुमुखी आसीत्। संस्कृतभाषायाः सर्वत्र तस्य अद्भुतं पाण्डित्यम् आसीत्। सिद्धान्तकौमुद्याः व्याख्यया साकं पाण्डित्यपूर्णानि कानिचन कार्याणि व्याकरणमाधारीकृत्य तेन सम्पादितानि। तेषु कार्येष्वेकं शब्दार्थरत्नम्। पाणिनीयसिद्धान्तैः सुगठितस्य संस्कृतव्याकरणस्य दार्शनिकं भागं प्रतिपादयति स ग्रन्थः। वाक्यपदभेदेनास्य शब्दार्थरत्नग्रन्थस्य खण्डद्वयं वर्तते। वाक्यकाण्डे वाक्यसम्बन्धिविचाराः, पदकाण्डे पदसम्बन्धीयविचाराः विद्यन्ते। तत्र वाक्यकाण्डे शब्दसाधुत्वप्रसङ्गः प्रबन्धेऽस्मिन् विचार्यते।

* सहायकाध्यापकः, संस्कृतविभागे उत्तरवङ्गविश्वविद्यालयस्य, sudiprkmvu@gmail.com

## १. शब्दसाधुत्वविचारः

व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेन इत्यर्थे विपूर्वकात् आङ्पूर्वकाच्च कृधातोः “करणाधिकरणयोश्च” [३/३/११७] इति सूत्रेण ल्युटि अनुबन्धलोपे, योः अनादेशे गुणे रपरत्वे णत्वे च व्याकरणशब्दः निष्पद्यते। व्याक्रियन्ते प्रकृतिप्रत्ययविभागपूर्वकं विविच्य असाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते अनेन इति विग्रहे वा व्याकरणशब्दस्य निष्पत्तिः। तत्र किंनाम साधुत्वम् इति जिज्ञासायां साधुत्वस्य स्वरूपं विचार्यते। ननु साधुत्वं साधयति बोधयतीति व्युत्पत्त्या बोधकत्वम् इति चेत् गाव्यादिषु अपशब्देष्वपि तस्य बोधकत्वस्य सत्त्वात् तत्र अतिव्याप्तिः स्यात्। शक्तत्वं साधुत्वम् इति चेत् पचति इत्यत्र पच्-धातोः लटश्च पाकक्रिया-वर्तमानकालादिरूपार्थवत्वात् यद्यपि तयोः साधुतापत्तिः स्यात् तथापि तत्र विद्यमानानां विकरणानामनर्थकत्वात् असाधुतापत्तिः स्यात्। वृत्तिमत्त्वस्य साधुत्वापत्तौ तु द्योतकेषु निपातेषु चाव्याप्तिः स्यात्। अतः किं तावत् साधुत्वम् इति जिज्ञासायाम् आचार्येण तारानाथतर्कवाचस्पतिना तल्लक्षणम् उक्तम्– “शब्दानां साधुत्वञ्च शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नत्वमभियुक्तोपदिष्टत्वरूपाना-दित्वं पुण्यसाधनप्रयोगविषयत्वं व्याकरणव्यङ्ग्यजातिविशेषो वा” इति। अत्र चत्वारि लक्षणानि प्राप्यन्ते। यैः साधुत्वं प्रतिपाद्यते। तथाहि शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नत्वम्, अभियुक्तोपदिष्टत्वरूपा-नादित्वं, पुण्यसाधनप्रयोगविषयत्वं, व्याकरणव्यङ्ग्यजातिविशेषश्चेति। एतेषां विवरणमधः प्रतिपाद्यते।

### १.१. शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नत्वम्

शक्तेः वैकल्यं शक्तिवैकल्यम् इति षष्ठीतत्पुरुषः, शक्तिवैकल्येन प्रयुक्तं शक्तिवैकल्यप्रयुक्तम् इति तृतीयातत्पुरुषः। अन्यथा उच्चारितम् अन्यथो-च्चारितम् इति मयूरव्यंसकादिवत्समासः कर्मधारयः। शक्तिवैकल्यप्रयुक्तं चैतत् अन्यथोच्चारितञ्चेति शक्तिवैकल्यप्रयुक्तान्यथोच्चारितम् इति कर्मधारयः। ततः “प्रशंसायां रूपप्” [५/३/६६] इति सूत्रेण प्रशंसार्थे विद्यमानात् शक्तिवैकल्य-प्रयुक्तान्यथोच्चारितशब्दात् स्वार्थे रूपप्प्रत्यये शक्तिवैकल्यप्रयुक्तान्यथोच्चारित-रूपम् इति सिद्ध्यति। शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपश्चासौ अपभ्रंशश्चेति शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशः इति कर्मधारयः, तस्माद् भिन्नः शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नः इति तत्पुरुषः। तस्य शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नस्य

भावः शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नत्वम्। अनेन लक्षणेन अपभ्रंशभिन्नत्वं साधुत्वमित्येव उच्यते। अपभ्रंशत्वं च शक्तिवैकल्यप्रयुक्तान्यथोच्चारितत्वम् इति बोध्यम्। शक्तेः विकारात् प्रयुक्ताः अन्यथारूपेण उच्चारिताः शब्दाः अपभ्रंशाः भवन्ति इति फलितम्। तस्माद् अपभ्रंशाद् भिन्नाः शब्दाः साधवः इत्युच्यन्ते। तत्त्वं साधुत्वमित्यर्थः। यथा शक्तेः विकारात् प्रयुक्ताः गावीगोणीगोतागोपोतलिकेत्यादयः अन्यथारूपेण उच्चारिताः शब्दाः अपभ्रंशाः भवन्ति। तेभ्यः गाव्यादिभ्यः अपशब्देभ्यः भिन्नः भवति गोशब्दः, अतः तस्य साधुत्वम्।

## १.२. अभियुक्तोपदिष्टत्वरूपानादित्वम्

अभियुक्ताः शिष्टाः भवन्ति। तैः उपदिष्टम् अभियुक्तोपदिष्टम् इति तृतीयातत्पुरुषः। तस्य अभियुक्तोपदिष्टस्य भावः अभियुक्तोपदिष्टत्वम्। ततः "प्रशंसायां रूपप्" [५/३/६६] इति सूत्रेण प्रशंसार्थे विद्यमानात् अभियुक्तोपदिष्टत्वशब्दात् स्वार्थे रूपप्प्रत्यये अभियुक्तोपदिष्टत्वरूपम् इति सिद्ध्यति। न आदिः अनादिः इति नञ्तत्पुरुषः। तस्य भावः अनादित्वम्। अभियुक्तोपदिष्टत्वरूपं चैतत् अनादित्वञ्चेति अभियुक्तोपदिष्टत्वरूपानादित्वम् इति कर्मधारयः। अर्थात् पाणिन्यादिभिः शिष्टजनैः उक्ताः अनादयः शब्दाः साधवः इत्यर्थः। यथा पाणिन्यादिभिः शिष्टजनैः उपदिष्टस्य गोशब्दस्य व्यवहारः कुतः कदा वा आरब्धः इति केनापि वक्तुं नैव शक्यते। तेन गोशब्दस्य अनादित्वं सिद्धम्। अतः तस्य गोशब्दस्य शिष्टोपदिष्टत्वात् अनादित्वाच्च साधुत्वम् इति ज्ञेयम्। परन्तु शिष्टजनैः अनुपदिष्टत्वात् गाव्यादीनां शब्दानाम् असाधुत्वम् इति बोध्यम्।

## १.३. पुण्यसाधनप्रयोगविषयत्वम्

पुण्याय साधनम् पुण्यसाधनम् इति चतुर्थीतत्पुरुषः। प्रयोगस्य विषयः प्रयोगविषयः इति षष्ठीसमासः। पुण्यसाधनञ्च प्रयोगविषयश्च इति पुण्यसाधनप्रयोगविषयः इति कर्मधारयसमासः। तस्य भावः पुण्यसाधनप्रयोगविषयत्वम् इति। पुण्यसाधकाः प्रयोगविषयाः भवन्ति साधुशब्दाः। तत्त्वं साधुत्वमित्यर्थः। यथा सास्नालाङ्गूलककुदखुरविषाण्यर्थे प्रयोगस्य विषयः भवति गौः इति साधुशब्दः, स च पुण्याय प्रयुज्यते। अतः गोशब्दस्य साधुत्वम्। परन्तु सास्नालाङ्गूलककुदखुरविषाण्यर्थे यद्यपि प्रयोगस्य विषयाः भवन्ति गाव्यादयः अपशब्दाः तथापि ते पुण्याय न कल्पन्ते। अतः गाव्यादीनामसाधुत्वम्।

### १.४. व्याकरणव्यङ्ग्यजातिविशेषः

व्याकरणेन व्यङ्ग्यः व्याकरणव्यङ्ग्यः इति तृतीयातत्पुरुषः। जातिरेव विशेषः जातिविशेषः इति कर्मधारयः। व्याकरणव्यङ्ग्यश्चासौ जातिविशेषश्चेति व्याकरणव्यङ्ग्यजातिविशेषः इति कर्मधारयः। अर्थात् व्याकरणेन व्यङ्ग्यस्य बोध्यस्य शब्दसाधुत्वरूपजातिविशेषस्य एव साधुत्वमित्यर्थः। यथा गोत्वं गोः जातिः, सा च गोत्वरूपा जातिः गोः आकृत्या व्यङ्ग्या भवति। तथैव शब्दसाधुत्वं साधुशब्दानां जातिः भवति। सा च शब्दसाधुत्वरूपा जातिः व्याकरणेन व्यङ्ग्या अर्थात् बोध्या भवति। अतः गोशब्दस्य साधुत्वं बोध्यम्। परन्तु गाव्यादिषु अपशब्देषु व्याकरणव्यङ्ग्या तादृशी साधुत्वजातिः न दृश्यते। अतः गाव्यादीनाम् असाधुत्वम् इति बोध्यम्।

### २. शब्दकौस्तुभकाराभिमतम्

आचार्येण श्रीमद्भट्टोजिदीक्षितेनापि शब्दकौस्तुभे साधुत्वस्य उपर्युक्तानि एव चत्वारि लक्षणानि अङ्गीकृतानि। अत एव आचार्येण भट्टोजिदीक्षितेन उक्तम्–

"अनपभ्रष्टताऽनादिर्यद्वाऽभ्युदययोग्यता।
व्याक्रिया व्यञ्जनाया वा जातिः काऽपीह साधुता॥"[१] इति।

अत्र अनपभ्रष्टता, अनादिः, अभ्युदययोग्यता, व्याक्रिया व्यञ्जनाया वा जातिः चेति लक्षणचतुष्टयम्। शब्दार्थरत्नकारेणेव भट्टोजिदीक्षितेनापि प्रथमलक्षणेन अपभ्रंशभिन्नस्य साधुत्वं प्रतिपाद्यते। तथाहि शक्तिवैकल्यादिप्रयुक्तम् अन्यथोच्चारणं भवति अपभ्रष्टता। न अपभ्रष्टता इति अनपभ्रष्टता इति नञ्तत्पुरुषः। अनपभ्रष्टता एव साधुता। शक्त्या लक्षणया वा यमर्थं बोधयितुं यादृक् शब्दः प्रयुज्यते, स तस्मिन् एवार्थे दोषात् अन्यथा उच्चारितश्चेत् असाधुः भवति। तद्भिन्नस्तु साधुरित्यर्थः। यथा शक्तिवैकल्यादिभिः अन्यथोच्चारणविरहरूपाणां गौः इत्यादीनां शब्दानां साधुत्वमित्यर्थः। द्वितीयलक्षणेनापि शब्दार्थरत्नवत् अनादित्वं प्रतिपादितम्। अविद्यमानः आदिः यस्य इति अनादिः। आदिरहितः इत्यर्थः। गोशब्दस्य व्यवहारः कदा केन आरब्धः इति केनापि वक्तुं न शक्यते। अतः गोशब्दस्य अनादित्वं सिद्धम्। एतादृशानाम् आदिरहितानां गोशब्दादीनाम् एव साधुत्वमित्यर्थः। अभ्युदयसाधिका योग्यता यत्र वर्तते सोऽपि साधुरित्यर्थः। अभ्युदयः अर्थात् इष्टलाभस्तु पुण्याधिक्येन सिद्ध्यति। पुण्यसाधनयोग्यता

---

[१] शब्दकौस्तुभे साधुत्वनिरूपणावसरे उक्तम्।

यत्र वर्तते, तस्यापि साधुत्वमित्यर्थः। तद् एव तारानाथतर्कवाचस्पतिना पुण्यसाधनप्रयोगविषयत्वादिना उक्तम्। अन्तिमे तु शब्दार्थरत्नकारवत् भट्टोजिदीक्षितेनापि व्याक्रियायाः व्यञ्जनायाः वा जातेः साधुत्वं प्रतिपादितम्। अर्थात् व्याकरणेन व्यङ्ग्या या साधुत्वजातिः, तस्याः अपि साधुत्वमित्यर्थः।

**३. वाक्यपदीयकाराभिमतम्**

आचार्येण भर्तृहरिणापि वाक्यपदीयस्य ब्रह्मकाण्डे साधुत्वस्य स्वरूपं प्रतिपादितम्। तत्रोच्यते कार्याकार्यरूपं वाच्यावाच्यरूपञ्च अनुशासनम् अनुपालयन्ति ये ते शिष्टाः भवन्ति। तेभ्यः कृतविद्येभ्यः शिष्टेभ्यः आगमात् अविच्छिन्नपरम्पराप्रवर्तितशास्त्राच्च निष्पन्नाः शब्दाः साधवः भवन्ति। यथा गोशब्दः पाणिन्यादिभ्यः शिष्टेभ्यः "गमेर्डोः"[२] इत्यादिव्याकरणशास्त्रात् वा सिद्ध्यति। अतः गोशब्दस्य साधुत्वम्। एतादृशं साधुत्वं तारानाथतर्कवाचस्पतिनापि अभियुक्तोपदिष्टत्वरूपानादित्वमित्यनेन प्रतिपादितम्। अर्थबोधनम् एव शब्दानां प्रथमं कार्यम्। अतः साधुशब्दप्रयोगेण अपशब्दप्रयोगेण वा विवक्षितार्थः ज्ञायते। एवम् अर्थबोधे शब्दापशब्दयोः अभिन्नत्वेऽपि साधुशब्दप्रयोगेण धर्मः भवतीति वैयाकरणैः उच्यते। अर्थात् साधुशब्दैः अभ्युदयः भवतीति बोध्यम्। अत एवोच्यते भाष्यकारेण "समानायामर्थावगतौ शास्त्रेण धर्मनियमः क्रियते"[३] इति। भर्तृहरिणापि उच्यते "वाचकत्वाविशेषेऽपि नियमः पापपुण्ययोः" इति "साधुभिस्तस्माद्वाच्यमभ्युदयार्थिभिः"[४] इति च।

**४. प्रतिपादितेषु साधुत्वलक्षणेषु लक्षणत्वविचारः**

आचार्येण तारानाथतर्कवाचस्पतिना यद्यपि शब्दार्थरत्नस्यादौ साधुत्वलक्षणे चत्वारः अंशाः प्रतिपादिताः, तथापि तेषां प्रत्येकस्य न लक्षणत्वम् इति परं सूचितम्। तत्रोच्यते टिघुप्रभृतीनां स्वेच्छया विहितानां संज्ञाशब्दानां पाणिन्यादिभिः शिष्टजनैः उपदिष्टत्वात् यद्यपि तेषाम् अभियुक्तोपदिष्टत्वं वर्तते, तथापि तेषां संज्ञाशब्दानां कृत्रिमतया अर्थात् पाणिन्यादिभिः विधानात् अनादित्वं नैव सिद्ध्यति। तेषां तु सादित्वम् एव सिद्ध्यति। अतः अभियुक्तोपदिष्टत्वात्, सादित्वात्, अपभ्रंशत्वाभावाच्च एतेषु संज्ञाशब्देषु "अभियुक्तोपदिष्टत्वरूपानादित्वम्" इति लक्षणस्य अव्याप्तिः। पुनश्च संज्ञाशब्दानां यद्यपि प्रयोगविषयत्वं विद्यते तथापि

---

[२] उणादिसूत्रम्– २/६७

[३] महाभाष्यस्य पस्पशाह्निके धर्मनियमाधिकरणम्।

[४] वाक्यपदीये ब्रह्मकाण्डे कारिका - १३९

पुण्यजनकत्वाभावात् तेषां संज्ञाशब्दानां धर्मसाधनत्वम् अपि नास्ति। अतः धर्मसाधनत्वाभावात् अनपभ्रंशेषु संज्ञाशब्देषु “पुण्यसाधनप्रयोगविषयत्वम्” इति लक्षणस्यापि अव्याप्तिः। एवं चतुर्षु प्रथमद्वितीयलक्षणयोः दोषग्रस्तत्वात् अपभ्रंशभिन्नत्वस्य जातिविशेषस्य वा लक्षणत्वम् इति उक्तम्। वस्तुतः अन्तिमे व्याकरणव्यङ्ग्यजातिविशेषस्यैव साधुत्वमङ्गीक्रियते।

ननु एतेषां संज्ञाशब्दानां कथं साधुत्वम् इति जिज्ञासायाम् उच्यते तेषां साधुत्वं तु शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नत्वेन एव बोध्यम्। अत एव भर्तृहरिणा संज्ञाशब्दानां साधुत्वमाशङ्क्य अनपभ्रंशमात्रेणैव तेषां साधुत्वं प्रतिपादितम्। तथा चोक्तमाचार्येण–

“यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः।
कथं नु तासां साधुत्वं नैव ताः साधवो मता॥”[५] इति।

शिष्टजनैः स्वेच्छया टिघुभादयः याः एतादृश्यः संज्ञाः क्रियन्ते, तेषां संज्ञाशब्दानां साधुत्वं कथं सम्भवतीति आशङ्कायाम् उक्तम्– एतादृशानां संज्ञाशब्दानां शक्तिवैकल्यप्रयुक्तान्यथो-च्चारणत्वाभावाद् अनपभ्रंशत्वरूपं तन्नाम साधुत्वं विद्यते। कारणं हि तासां संज्ञानां शक्तिवैकल्यादिभिः प्रयुक्तम् अन्यथोच्चारणत्वरूपम् असाधुत्वं तु नास्त्येव। पुनश्च असाधुशब्दानां प्रयोगेण यथा पापम् उत्पद्यते तथैव पापं संज्ञाशब्दानां प्रयोगेण नोत्पद्यते। यथा चोक्तं भर्तृहरिणा–

“अनपभ्रंशरूपत्वं नाप्यासामपशब्दता।
असाधूनां प्रयोगे वा प्रत्यवायोऽपि नो तथेति॥”[६] इति।

ननु तारानाथतर्कवाचस्पतिना यद्यपि संज्ञाशब्दानाम् अनपभ्रंशत्वेन साधुत्वम् प्रदर्शितम्, तथापि तस्मिन् अनपभ्रंशत्वरूपे साधुत्वलक्षणे अन्योन्याश्रयदोषापत्तिः इत्युक्तम्। तत्र शक्तिवैकल्यादिभिः अन्यथोच्चारितसाधुरूपाणाम् अपभ्रंशत्वे, अपभ्रंशभिन्नत्वस्य साधुत्वे च परस्परसापेक्षत्वात् अन्योन्याश्रयदोषापत्तिः। अतः जातिविशेषस्यैव साधुत्वलक्षणत्वम् इति सिद्धान्तितम्। अस्मादेव कारणाद् दीक्षितपादैः शब्दकौस्तुभे साधुत्वनिरूपणावसरे धर्मजनकतावच्छेदकतया तज्जातिसिद्धेः प्रदर्शनार्थं “अनपभ्रष्टताऽनादिर्यद्वाऽभ्युदययोग्यता” इति उक्तम्। तत्र

---

५ पदमञ्जर्यां पत्रसंख्या - ८

६ “अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता” इत्येतादृशः कारिकार्धभागः शब्दकौस्तुभे साधुत्वनिरूपणावसरे प्राप्यते।

अभ्युदययोग्यतेति प्रथमं व्युत्पाद्य जातिपक्षस्य सर्वोत्तरकाले एव निर्देशः क्रियते। ननु साधुत्वलक्षणस्य चतुर्द्धा प्रदर्शनं किमर्थम् इति जिज्ञासायाम् उच्यते चतुर्द्धाप्रदर्शनं तु विस्तारार्थं पूर्वपूर्वनिरासेन उत्तरोत्तरव्यवस्थापनार्थञ्चेति।

## ५. साधुत्वजातौ साङ्कर्य्यदोषपरिहारः

व्यक्तेरभेदः तुल्यत्वं सङ्करः अनवस्थितिः रूपहानिः असम्बन्धः चेति जातिबाधकेषु[७] अन्यतमं भवति साङ्कर्य्यम्। परस्परात्यन्ताभावसमानाधिकरणधर्मयोः एकत्र समावेशः एव साङ्कर्य्यम्। यथा भूतत्वाभावाधिकरणे मनसि परिच्छिन्नपरिमाणवत्त्वरूपं मूर्तत्वं, मूर्तत्वाभावाधिकरणे आकाशे बहिरिन्द्रियेण ग्राह्यं गन्धादिविशेषगुणवत्त्वरूपं भूतत्वं तिष्ठति। तयोः परस्परात्यन्ताभावसमानाधिकरणधर्मयोः भूतत्वमूर्तत्वयोः एकत्र पृथिव्यादिषु चतुर्षु सत्त्वात् साङ्कर्य्यदोषापत्तिः। एवं नरसिंहादिष्वपि ऊह्यम्। एतादृशयोः परस्परविरूद्धधर्मयुक्तयोः साङ्कर्य्ये जातित्वं नैव स्वीक्रियते इत्यर्थः। एवं सति साध्वभावाधिकरणेषु असाधुषु वर्तमानैः कत्वादिभिः, असाध्वभावाधिकरणेषु साधुषु वर्तमानैः कत्वादिभिः च बाधकस्य साङ्कर्य्यस्य साधुत्वे सत्त्वात् कथं साधुत्वस्य जातित्वम् इति चेद् उच्यते यथा व्याप्यव्यापकजात्योः साङ्कर्य्यस्य जातिबाधकाभावत्वं तथैव ययोः सामानाधिकरण्येन एव साङ्कर्य्यसिद्धिः तयोः सामानाधिकरण्यस्यापि जातिबाधकाभावत्वम्। गुणगतजातौ साङ्कर्य्यस्य बाधकत्वाभावे साध्वसाधुषु वर्तमानकत्वादिभिः साङ्कर्य्येऽपि साधुत्वजातौ न बाधकत्वम् इत्यर्थः। अत एव मञ्जूषायां नागेशेनोक्तम्– "सामानाधिकरण्यस्य व्याप्यव्यापकभावापन्नजात्योः साङ्कर्यस्येवादोषत्वात्"[८] इति। भट्टोजिदीक्षितेनापि शब्दकौस्तुभे उक्तम्– "उपाधिसङ्करवदेव जातिसङ्करोऽपि सर्वत्रास्तु दूषकताबीजानिरुक्तेः, विनिगमकाभावेन भूतत्वमूर्त्तत्वयोरिव शरीरत्वपृथिवीत्वयोर्द्वयोरपि जातित्वभङ्गापत्तेश्च"[९] इति। अर्थात् दूषकताबीजानां निरूपणाभावे यदि उपाधिसङ्करवत् जातिसङ्करः सर्वत्र अङ्गीक्रियते तर्हि विनिगमकाभावेन

---

[७] व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥ इति भाषापरिच्छेदे प्रत्यक्षखण्डे सामान्यनिरूपणावसरे उक्तम्।

[८] साधुत्वजातौ साङ्कर्य्यस्याबाधकत्वप्रसङ्गे कथितम्।

[९] साधुत्वनिरूपणप्रसङ्गे "अनपभ्रष्टताऽनादिर्यद्वाऽभ्युदययोग्यता" इति कारिकायाः व्याख्यानावसरे उक्तम्।

भूतत्वमूर्त्तत्वयोः यथा जातित्वभङ्गापत्तिः तथैव शरीरत्वपृथिवीत्वयोः उभयोः अपि जातित्वभङ्गापत्तिः स्यादित्यर्थः।

सा च साधुत्वजातिः धर्मजनकतावच्छेदकतया सिद्ध्यतीति पूर्वम् एव प्रतिपादितम्। तच्च साधुशब्दानां धर्मविशेषजनकत्वं "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शब्देन धर्म्मनियमः" [10] इति महाभाष्यकारेण फणिमणिना, "एकः शब्दः सुप्रयुक्तः सम्यक् ज्ञातः स्वर्गे लोके कामधुक् भवति" [11] इति श्रुत्या च प्रतिपादितम्। अतः धर्मजनकतावच्छेदकतया साधुत्वसिद्धौ फलवत्त्वेन साङ्कर्य्यस्य दूषकताभावत्वम्। अयम् एव जातिपक्षः "अभियुक्तोपदिष्टः साधुः" इति जैमिनिसूत्रोक्तं साधुत्वम् उदाहृत्य मञ्जूषायां चरमे उपस्थापितः। शब्दानां पुण्यजनकत्वं तु शब्दप्रयोगेण शब्दज्ञानेन च बोध्यम्। अत एव भाष्यकारेण शेषनागेनोक्तम्– "शास्त्रपूर्वके प्रयोगेऽभ्युदयः" [12] इति। अर्थात् ज्ञानपूर्वकं यः शब्दान् प्रयुङ्क्ते सः एव अभ्युदयेन युज्यते इत्यर्थः।

## ६. उपसंहारः

इत्थं शब्दार्थरत्नकृता तारानाथतर्कवाचस्पतिना साध्वसाध्वोः स्वरूप-निरूपणावसरे प्रतिपादितं "शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंश-भिन्नत्वम् अभियुक्तोपदिष्टत्वरूपानादित्वं पुण्यसाधनप्रयोगविषयत्वं व्याकरणव्यङ्ग्यजातिविशेषो वा" इति साधुत्वलक्षणं विस्तारेण सोदाहरणञ्च प्रबन्धेऽस्मिन् प्रपञ्चितम्। ततः ग्रन्थान्तरेषु शब्दकौस्तुभवाक्यपदीयादिषु प्रतिपादितस्य साधुत्वलक्षणस्य समन्वयः प्रदर्शितः। ततः प्रतिपादितेषु शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नत्वम्, अभियुक्तोपदिष्टत्व-रूपानादित्वम्, पुण्यसाधनप्रयोगविषयत्वम्, व्याकरणव्यङ्ग्यजातिविशेषः इति चतुर्षु साधुत्वलक्षणेषु प्रथमद्वितीयलक्षणयोः अव्याप्तिदोषेण, तृतीयलक्षणस्य च अन्योन्याश्रयदोषेण दोषग्रस्तत्वात् चतुर्थलक्षणस्य व्याकरणव्यङ्ग्यजातिविशेषस्यैव लक्षणत्वम् इति उक्तम्। ततः साधुत्वजातौ साङ्कर्यदोषपरिहारेण प्रबन्धः समाप्यते।

* * *

१० महाभाष्ये प्रथमाध्याये प्रथमाह्निके उक्तम्। अत्र प्रसिद्धेषु मुद्रितपुस्तकेषु "समानायामर्थावगतौ शब्देन चापशब्देन च शब्देन धर्मनियमः" इति पाठः एव आधिक्येन दृष्टः अस्माभिः। किन्तु शब्दार्थरत्नस्य मुद्रितग्रन्थे शब्दैश्चापशब्दैश्च इति पाठः दृश्यते। अतः पाठभेदः स्यादिति आस्माकीना मतिः।

११ ऋग्वेदः [६/१/८४]

१२ महाभाष्यस्य प्रथमाध्याये प्रथमाह्निके धर्मजनकताधिकरणम्।

## Bibliography

1. *Kāśikā (Nyāsa-padamañjarī-sahitā)*; Vāmana & Jayāditya; Jayaśaṅkaralāla Tripāṭhī & Sudhākara Mālavīya (eds.); Tara Book Agency; Benaras; 1984
2. *Paramalaghumañjūṣā*; Nāgeśa; Jayaśaṅkaralāla Tripāṭhī (ed.); Krishnadas Academy; Benaras; 2004
3. *Prauḍhamanoramā*; Bhaṭṭojidīkṣita; Sabhāpati Śarma Upādhyāya (ed.); Vani Vilasa Prakashan; Benaras; 1997
4. *Laghuśabdenduśekharaḥ (Bhairavī-ṭippaṇī-sahitaḥ)*; Nāgeśa; Śivaprasāda Śarmā & Śrīnivāsa Śarmā (eds.); Chowkhamba Surabharati Prakashan; Benaras; 2006
5. *Vyākaraṇamahābhāṣyam*; Patañjali; Jayaśaṅkaralāla Tripāṭhī (ed. & tr.); Chowkhamba Krishnadas Academy; Benaras; 2013; vol I
6. *Vākyapadīyam*; Bhartṛhari; Harinārāyaṇa Tivārī (ed. & tr.); Chowkhamba Krishnadas Academy; Benaras; 2015
7. *Vaiyākaraṇabhūṣaṇasāraḥ (Sāvitrī-vyākhyopetaḥ)*; Kauṇḍabhaṭṭa; Ādyāprasāda Miśra (ed. & tr.); Sampurnanand Sanskrit University; Benaras; 1988
8. *Śabdakaustubhaḥ*; Bhaṭṭojidīkṣita; Vindhyeśvarī Prasāda Dvivedī & Gaṇapati Śāstrī Mokāṭe (eds.); Rashtriya Sanskrit Sansthan; New Delhi; 2006
9. *Śabdārtharatnam*; Tārānāthatarkavācaspati; Kavyaprakasha Mudranalaya; Kolkata; 1872
10. *Śabdārtharatnam*; Tārānāthatarkavācaspati; Umāśaṅkara Śarmā (ed.); Chowkhamba Bharati Academy; Benaras; 2015



# नृनरयोर्वृद्धिश्च

सुखदेवभट्टः *

**Abstract**

[There is confusion about how to derive the word. Because there is no direct rule in *Pāṇini*'s *Aṣṭādhyāyī* to replace '*a*' with '*ā*' that follows '*n*' in the word '*nara*' while transforming it into '*nārī*'. There is a *gaṇasūtra* '*nṛnarayorvṛddhiśca*' to solve this problem. But *Nāgeśa* opines that this aphorism is not authentic. If so, the problem remains: how to derive the word '*nārī*'. This paper deals with this problem.]

## ०. गणसूत्रपरिचयः

भगवता पाणिनिना प्रणीतायाम् अष्टाध्याय्यां चतुर्थाध्यायस्थ-प्रथमपादस्थ-त्रिसप्ततितमे 'शार्ङ्गरवाद्यञो ङीन्' [अष्टाध्यायी ४/१/७३] इति सूत्रे शार्ङ्गरवादिगणे पठितं पदत्रयात्मकं गणसूत्रम् इदं 'नृनरयोर्वृद्धिश्च' इति। चकारात् सूत्रे विद्यमानस्य ङीनः परामर्शः। तथा च सूत्रार्थो भवति– नृशब्दाद् नरशब्दाच्च ङीन् भवति एतयोः वृद्धिश्च भवतीति। द्वयोरपि नृनरशब्दयोः उदाहरणं नारी इति। णीञ् प्रापणे इति धातोः 'नयतेर्डिच्च' [उणादिसूत्रं २/१००] इति ऋत्प्रत्यये डित्वात् टिलोपे च नृ इति तस्माद् नृशब्दाद् ङीनि नृ ई इत्यवस्थायां वृद्धौ सत्यां नारी इति रूपं सिध्यति। तथैव नृ नये इति धातोः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' [अष्टाध्यायी ३/१/१३५] इति कर्तरि अचि नर इति शब्दो निष्पद्यते। तस्मान् ङीनि वृद्धौ सत्यां च नारी इति रूपं सिध्यति।

## १. गणसूत्रप्रयोजनम्

ननु किमर्थम् इदं गणसूत्रम् इति चेद्, नारी इति रूपसाधनार्थम्। अन्यथा हि नृशब्दात् "ऋन्नेभ्यो ङीप्" इति शास्त्रेण ङीपि सति, नरशब्दाच्च 'जातेरस्त्रीविषयादयोपधाद्' [अष्टाध्यायी ४.१.६३] इति शास्त्रेण ङीषि सति नरी इत्येव स्यात्। ननु तर्हि ङीनर्थः चकारः कुतः? अनेन वृद्धिमात्रं विधीयताम् अथ च शार्ङ्गरवादिगणे अस्य गणसूत्रस्य पाठश्च किमर्थः? न पुनः स्वातन्त्र्येणैव इदं सूत्रं पठितुं शक्यम् इति चेत्, तत्र उच्यते ङीनो विधानार्थम्

* सहायकाध्यापकः, संस्कृतदर्शनविभागे, रामकृष्णमिशन्-विवेकानन्दशैक्षणिकशोधसंस्थाने, sukhdevbhatt99@gmail.com

एव चकारः। न च ङीषा ङीपा च सिद्धं तद् इति वाच्यं, स्वरवैलक्ष्यण्यापत्तेः। यतो हि ङीनि सति 'ञ्नित्यादिर्नित्यम्' [अष्टाध्यायी ६/१/१९७] इति शास्त्रेण आद्युदात्तत्वं विधीयते, ङीषि सति तु 'आद्युदात्तश्च' [अष्टाध्यायी ३/१/३] इति शास्त्रेणोदात्तत्वेनान्तानुदात्तत्वं न स्याद् अतश्चकारस्यापि ग्रहणं कर्तव्यम् एव।

## २. नरशब्दप्रयोजनम्

ननु तर्हि नरशब्दस्य ग्रहणं कुतः? नारी इति रूपसाधनार्थम् इति तु नाभिधातुं शक्यम्। नृशब्दादेव नारी इति रूपस्य सिद्धत्वात्। न च नरस्य स्त्री इत्यर्थे 'पुंयोगादाख्यायाम्' [अष्टाध्यायी ४/१/४८] इति शास्त्रेण ङीषि प्राप्ते तद्बाधनाय नरशब्दस्य ग्रहणम् इति वाच्यम्। "याम् उपोष्य नरी भक्त्या धनधान्यम् अवाप्नुयात्" "किन्नरीणां नरीणाम्" इत्यादौ नरस्य स्त्री इत्यर्थे नरीशब्दस्य प्रयोगदर्शनात्, तस्य प्रयोगस्येष्टत्वेन अत्र सूत्रे जातेरित्यनुवर्तनेन जातावेव ङीनः प्रवृत्तेः कौमुद्यां स्फुटम् अभिधानाद् नरीशब्दस्य व्यावर्तनासम्भवात्। तर्हि नरशब्दग्रहणं कुतः? इति चेत् तत्र उच्यते नरशब्दात् पुंयोगे नरीशब्दस्येष्टत्वेऽपि पुंयोगाभावे जातिमात्रविवक्षायां नारीति शब्द एव इष्टः, न तु नरी इति। अतो जातिमात्रविवक्षायां नरीशब्दव्यावर्तनम् एव नरशब्दस्य प्रयोजनं बोध्यम्।

## ३. नारीति रूपसाधनविचारः

ननु नरशब्देऽभिहितेऽपि नारी इति रूपं कथं सिध्यति? यतो हि नर ई इत्यवस्थायां 'नृनरयोर्वृद्धिश्च' इति गणसूत्रस्य अलोऽन्त्यपरिभाषैकवाक्यतया अन्त्यस्य रेफोत्तरवर्तिनः अकारस्य वृद्धौ सत्यां नरा ई इति जाते 'यस्येति च' [अष्टाध्यायी ६/४/१४८] इति आकारलोपे नरी इत्येव स्यात्। ननु यस्येतिलोपे सति वृद्धिविधानवैयर्थ्यम् इति तत्सामर्थ्याल्लोपस्य बाध इति उच्यते चेत्, तदापि गुणे नरे इति स्यात्। ननु यदि नरे इति रूपम् इष्टं स्यात् तर्हि वृद्धिविधानम् एव कुतः अकारादेशेऽपि अकारादेशविधानसामर्थ्येन यस्येतिलोपबाधसम्भवेन गुणे च नरे इति रूपं तु सिध्यत्येव। अतः एतावतापि वृद्धिविधानं व्यर्थम् एव। नच तर्हि वृद्धिविधानसामर्थ्येन गुणाभावे आकारश्रवणे सति नरा ई इत्येव रूपम् इष्टम् इति वाच्यम्, अत्र केचन एवम् अभिदधुः– नर ई इत्यवस्थायां यथा नृशब्दस्य अवयवस्य अन्त्यस्य ऋकारस्य अनेन नृनरयोर्वृद्धिश्चेति गणसूत्रेण वृद्धिर्भवति तद्वद् नरशब्दस्य अन्त्यस्य अकारस्यापि यदि स्यात् तर्हि वृद्धिविधानं

पूर्वोक्तरीत्या व्यर्थम् एव। तत्सामर्थ्याद् आदौ यस्येति लोपे सति नर् ई इत्यवस्थायाम् अलोन्त्यपरिभाषया रेफस्य वृद्धौ प्राप्तायां 'स्थानेऽन्तरतम' [अष्टाध्यायी १/१/५०] इति सप्तम्यन्तपाठघटितसूत्रेण अन्तरतमे स्थानिनि आदेशो भवति इति वचनाद् नकारोत्तरवर्त्यकारस्यैव वृद्धौ सत्यां नारीति रूपं भवतीति। यद्यपि नर् ई इति अवस्थायां 'नृनरयोर्वृद्धिश्च' इति गणसूत्रस्य अन्तरतमपरिभाषाऽलोन्त्यपरिभाषाभ्याम् एकवाक्यत्वाद् अन्तरतमपरिभाषया अकारस्य वृद्धिः प्राप्नोति, तथा च अलोन्त्यपरिभाषया अन्त्यस्य रेफस्य वृद्धिः प्राप्नोति। इह कस्याः परिभाषायाः आश्रयणं स्यात्? तद् आह "गुणे त्वन्याय्यकल्पना" इति न्यायेन गुणभूताया अलोऽन्त्यपरिभाषाया बाधे सति नकारोत्तरवर्त्यकारस्यैव वृद्धौ नारी इति रूपं सिद्धम् इति। तत्र उच्यते तन्न साधु। सर्वप्रथमं तु 'स्थानेऽन्तरतम' इति शास्त्रे सप्तम्यन्तपाठः सिद्धान्ते न विद्यते। यतो हि सप्तम्यन्तपाठेऽङ्गीक्रियमाणे अन्तरतमे स्थानिनि आदेशो भवति इत्यर्थो लभ्यते। तथा सति कुमार्यौ इत्यादौ यण् न स्याद् अन्तरतमे ह्रस्वेकारे चरितार्थस्य यणः दीर्घे प्रवृत्तिः न स्यात् तस्य द्विमात्रिकत्वेन अन्तरतमत्वाभावात्। अतः सप्तम्यन्तपाठस्य दूषितत्त्वेन प्रथमान्तपाठस्यैवाङ्गीकारेण, तस्मिंश्च पक्षे 'स्थानेऽन्तरतम' इति परिभाषया स्थानिनः अनन्तरम आदेशो व्यावर्त्यते न तु स्थानी इति अलोऽन्त्यपरिभाषया प्राप्तस्य रेफस्यैव स्थाने वृद्धिः स्यात्। वृद्धौ च सत्यां पर्यायेण आकारैकारौकाराः स्युः। अथ च "गुणे त्वन्याय्यकल्पना" इति न्यायेन अलोऽन्त्यपरिभाषाबाधः इत्यपि न युक्तम् उभयोरपि परिभाषात्वाविशेषेण गुणगुणिभावाभावात्।

ननु तर्हि नर ई इत्यवस्थायां 'यस्येति च' इति लोपो भवति वा वृद्धिर्भवति वा इति चेद् यदि 'नृनरयोर्वृद्धिश्चे'ति गणसूत्रस्य अलोऽन्त्यपरिभाषैकवाक्यतया प्रवृत्तेः अनन्तरं यस्येति च इति सूत्रस्यापि प्रवृत्तिस्स्याद् तदा वृद्धिविधानस्य वैयर्थ्यं स्यात्तस्मात् सामर्थ्याद् आदौ 'यस्येति च' इति शास्त्रं प्रवर्तते। अपि 'यस्येति च' इति सूत्रस्य प्रधानस्य बाधापेक्षया "गुणे त्वन्याय्यकल्पना" इति न्यायेन नृनरयोर्वृद्धिश्चेति गणसूत्रस्य सहकारिभूतस्य अप्रधानस्य अलोऽन्त्यशास्त्रस्य बाधे सति नर् इति जाते 'स्थानेऽन्तरतम' इति परिभाषया अकारस्यैव वृद्धिर्भविष्यति इति चेत्, तदपि न युक्तं, 'यस्येति च' इति लोपानन्तरम् अपि नर् इत्यवस्थायाम् अप्यलोऽन्त्यपरिभाषया रेफस्यैव वृद्धौ प्राप्तायां, पूर्वोक्तरीत्या सप्तम्यन्तपाठस्य दूषितत्वेन 'स्थानेऽन्तरतम' इति परिभाषया अकारस्यैव वृद्धिर्भवति इति वक्तुम् अशक्यत्वाच्च। एवञ्च

एतावतापि नारी इति रूपं कथं सिध्यति इति प्रश्नः तदवस्थ एव। अत्र शेखरकारः आह– अत्राद्याकारस्यैव वृद्धिर्लक्ष्यानुसारिव्याख्यानाद् इति।

## ४.१. प्रथमं समाधानम्

तत्र हि एवम् उक्तं नरशब्दे नर् इति 'नर' इति लक्ष्यस्थशब्दघटकरेफान्तस्यानुकरणम्। नरः अः नरः, ना च नरश्च नृनरौ तयोः नृनरयोः इति। तथा च नरिति समुदायघटकोऽकारः प्रथम एव इति तस्यैव वृद्धिः इति। नन्वेवं सति ङीनपि नर्घटकप्रथमाकाराद् एव स्याद् इति चेत् तत्र उच्यते नृनरयोः इति आवर्तते, प्रथमे पञ्चम्यर्थे षष्ठी नृनरशब्दाभ्याम् इत्यर्थः तथा च नृनरशब्दाभ्यां ङीन् भवति इति अर्थो भवति, पुनः द्वितीये वृद्धिशब्दः सम्बध्यते, नरशब्दे च पूर्वोक्तरीत्या नरः अः इति विग्रहः तथा च अर्थो भवति नृशब्दस्य नरशब्दघटकाकारस्य च वृद्धिर्भवति इति नृशब्दस्थले अलोन्त्यपरिभाषया ऋकारस्यैव वृद्धिरिति उभयथाऽपि नारी इति रूपं निष्पद्यते। तत्र प्रत्यासत्त्या यतः ङीन् तस्यैव अवयवस्य नरोऽकारस्य वृद्धिः भवति इत्यतः वानरशब्दघटकनरशब्दस्य प्रथमाकारस्य वृद्धिर्न भवति। वानरशब्दघटकनरशब्दस्य अर्थवद्ग्रहणपरिभाषया आनर्थक्येन ततः ङीनः विधानं न भवतीति।

## ४.२. द्वितीयं समाधानम्

अथवा नरस्य अः नरः इति व्याख्यानम्। कतन्तशब्दे इव "शकन्ध्वादिषु पररूपं वाच्यम्" इति वार्तिकेन पररूपम्। तद्यथा कतस्य अन्तः कतन्त इति शकन्ध्वादित्वाद् निपातनाद्वा पररूपम् इति[१]। यद्यपि अकारः परोऽपि भवति, तथापि अन्त्यस्य तु अलोऽन्त्यपरिभाषया एव विधानात् प्रश्लेषविधानानार्थक्येन पूर्वस्यैव ग्रहणाद् इति। अत्रापि पक्षे आवृत्त्यादिकं सर्वम् अपि पूर्ववद् एव बोध्यम्। अथवा नृशब्दसाहचर्येण नरशब्देऽपि नकाराव्यवहितोत्तरतवर्तिनः अचः एव वृद्धिरिति व्याख्यानात् सर्वेष्टसिद्धिः।

## ५. परमसिद्धान्तः

वस्तुतस्तु इदं गणसूत्रम् अनार्षम्[२] इति सिद्धान्तः। यतो हि तस्य धर्म्यम् इत्यर्थे ऋकारान्ताद् अञ्प्रत्ययविधायकेन 'ऋतोऽञ्' [अष्टाध्यायी ४/४/४९] इति सूत्रेण यथा नृशब्दाद् अञ्प्रत्ययो विधीयते तथा नरशब्दाद् अपि

१ महाभाष्यप्रदीपव्याख्याने सर्वत्र लोहितादिकतन्तेभ्यः सूत्रे

२ महाभाष्योद्योतव्याख्याने ऋतोऽञ् इति सूत्रे

भवति इत्यर्थकम् एकं वचनम् आरब्धम् 'नृनराभ्याम् अञ्' इति। तत्र नरस्य धर्म्यम् इत्यर्थे अञि सति नारशब्दः आद्युदात्तः निष्पन्नः। अस्माद् ङीपि च नारी इति अन्तानुदात्तः इष्टः शब्दः सिध्यत्येव इति 'नृनरयोर्वृद्धिश्च' इति गणसूत्रं व्यर्थम्। ननु इदं तु तस्य धर्म्यम् इत्यर्थे विधीयमानं यौगिकं, न तु केवलजातिवाची रुढः इति कथं भिन्नेन शब्देन भिन्नस्य गतार्थत्वम् इत्यभिधीयते इति चेद्, उच्यते तस्य धर्म्यम् इत्यर्थस्य योग्यतया तद्वृत्तित्वेन रुढित्वे च शब्दशक्तिस्वभावस्यैव नियामकत्वेन यथाकथञ्चिच्छब्दानां निष्पत्तेरेव व्याकरणकार्यम् इत्यतः दोषाभावात्। यथा हि कुशलादिशब्दाः कुशान् लाति इत्यर्थे व्याकरणे साधिता अपि रुढित्वेनाश्रीयन्ते तथाऽत्रापि बोध्यम्। अत एव हि 'तव्यत्तव्यानीयरः' [अष्टाध्यायी ३/१/९६] इति सूत्रे 'वसेस्तव्यत् कर्तरि णिच्च' इति वार्तिकं भाष्यकारैः वास्तुनि भवो वास्तव्य इति विग्रहेण 'तव्यत्तव्यानीयरः' इति सूत्रेणैव सिध्यति इति अभिधाय इदं वार्तिकं प्रत्याख्यातं, त्वदुक्तरीत्या तु वसति इति विग्रहे तव्यत्प्रत्यये वास्तव्यम् इति रूपं, वास्तुनि भवम् इत्यर्थे वास्तव्यम् इति रूपम् इति शब्दस्य भेदेन एकेनान्यस्य गतार्थत्ववचनं न युज्येत। अतः तस्माद् भाष्याद् यथाकथञ्चित् शब्दानां साधुत्वसम्पादनेन व्याकरणकर्तव्यम् इति। तत्र रूढित्वादिकं तु लोकानुसाराद् इति गम्यते तेन इदं गणसूत्रम् अनर्थकम्। न च गणसूत्राभावे नरशब्दाद् जातौ नरी इति स्याद् इति चेद् इष्टापत्तेः, यथा हि पुंयोगे नरशब्दाद् नरी इति शब्दः सिध्यति तथैव जातावपि नरीति शब्दः इष्ट एव इति स्पष्टम् इदम् 'ऋतोऽञ्' सूत्रे उद्योते इति शिवम्।

***

## Bibliography

1. *Kāśikā (Nyāsapadamañjarīsahitā)*; Vāmana & Jayāditya; Jayaśaṅkaralāla Tripāṭhī & Sudhākara Mālavīya (eds.); Tara Book Agency; Benaras; 1984
2. *Paramalaghumañjūṣā*; Nāgeśa; Jayaśaṅkaralāla Tripāṭhī (ed.); Krishnadas Academy; Benaras; 2004
3. *Prauḍhamanoramā*; Bhaṭṭojidīkṣita; Sabhāpati Śarmā Upādhyāya (ed. & comm.); Vāṇī-vilāsa-prakāśana; Benaras; 1997

4. *Laghuśabdenduśekharaḥ (Bhairavī-ṭippaṇī-sahitaḥ)*; Nāgeśa; Śivaprasāda Śarmā & Śrīnivāsa Śarmā (eds.); Chowkhamba Surabharati Prakashan; Benaras; 2006
5. *Vyākaraṇamahābhāṣyam*; Patañjali; Vidyānidhi Śodhasaṃsthāna; Kurukṣetra; 2006
6. *Śabdakaustubhaḥ*; Bhaṭṭojidīkṣita; Vindhyeśvarī Prasāda Dvivedī & Gaṇapati Śāstrī Mokāṭe (eds.); Rashtriya Sanskrit Sansthan; New Delhi; 2006

✳ ✳ ✳

# प्राचीनभारतीयव्याकरणपरम्परायां कातन्त्रव्याकरणस्य वैशिष्ट्यम्

शुभङ्करदासः *

**Abstract**

[A lot of grammatical traditions were followed even up to the early 20th century in the *catuṣpāṭhīs* throughout *Bhārata*. One of the most popular grammars was the *Kātantra*. This is also known as *Kalāpa* or *Kālāpaka*. But a lot of people, even in the *Saṃskṛta* diaspora, are unaware of the author(s) of this grammar. The grammar even has two different versions in Bengal and Kashmir. There are even *paribhāṣās* that were used to study the system. This paper presents a vivid introduction to this grammar that is completely lost in academia today.]

## ०. उपोद्घातः

पृथिव्यां यावत्यो भाषाः सन्ति, तासु संस्कृतभाषा अन्यतमा, अत्युत्कृष्टा चेति वचनं सर्वजनविदितम् एव। काले कालेऽस्या भाषायाः संरक्षणाय संवर्धनाय च संस्कृतभाषायां नैकानि चान्द्रादिव्याकरणानि ग्रथितानि प्राचीनार्वाचीनैः महर्षिभिः। व्याक्रियन्त अर्थाद् व्युत्पाद्यन्ते, संस्क्रियन्ते वा शब्दा वर्णा अक्षराण्यथवा शुद्धीक्रियन्ते वागिन्द्रियाणि चानेनेति व्याकरणम् इति व्युत्पत्त्यैव शब्दानां साधुत्वसम्पादनाय व्याकरणशास्त्रं प्रयतत इति प्रमाणितं भवति। व्याकरणेनैव वाग्मलं विमलीभवति। ततश्च वेदराशीणां रक्षोहागमलघ्वाद्यायासेन सुपरिपालनं वेदपरम्परायाश्च अग्रे प्रवर्तनं सम्भवति। अत एव वेदकल्पपुरुषस्य मुखम् एव व्याकरणम् इति सुधिस्तल्लजा निरूपितवन्तः। भाषायां व्याकरणस्य महत्त्वम् एतावद् वर्तते यत्प्रशस्तिः श्रूयते– विना व्याकरणं काऽपि भाषा न प्रशस्यत इति। एवम् एव संस्कृतभाषायाः संस्कृतत्वम् अस्य व्याकरणस्य कारणाद् एव सञ्जातम्। इदानीन्तनकाले प्रसिद्धेषु संस्कृतव्याकरणेषु पाणिनिकर्तृकं व्याकरणं यद्यपि मुकुटस्थानं लभतेऽथापि पाणिनीयेतरव्याकरणेषु कातन्त्रव्याकरणं

* शोधच्छात्रः, संस्कृतदर्शनविभागे, रामकृष्णमिशन्-विवेकानन्दशैक्षणिकशोधसंस्थाने, subho110498@gmail.com

लौकिकप्रयोजनार्थं महत् स्थानं भजत इति वक्तुं क्लेशो नोत्पद्यते। अस्य व्याकरणस्य वैशिष्ट्यद्वयं वर्तते– सारल्यं कार्योपयोगित्वं च। ग्रन्थस्याकारदृष्ट्या च क्षुद्रत्वमस्यापरैका विशिष्टता सर्वजनविदितैव। एतस्य प्राचीनत्वं वैदिकशब्दप्रक्रियाभावत्वञ्च जनान् आकर्षयति मुहुर्मुहुः। पुरा व्याकरणम् इदम् आभारतम् एतावद् विस्तृतम् आसीद् यदस्य मूलरूपं किम् आसीद् इति निश्चये क्लेशः सञ्जायतेऽधुना। अत एव साम्प्रतिककाले कातन्त्रव्याकरणस्य काश्मीरीयवाररुचिसम्प्रदायः, वङ्गीयदौर्गसम्प्रदायश्चेति शाखाद्वयेन विभक्तो दृश्यते।

**१. कातन्तव्याकरणस्य रचनाविषये प्रसिद्धा कथा**

कातन्त्रव्याकरणस्य रचनाविषये काचित्कथा प्राप्यते कथासरित्सागरे, पुरा कश्चन उज्जयिनीपतिः सातवाहनाख्यो[1] नृपतिः राजमहिषिभिः सह जलक्रीडायां मग्न आसीत्। तदा तस्य काचिद्विदुषी महिषी जलक्रीडायां विमुखीभूता जलताडनं मा कार्षीः इत्याशयेन अवोचत्– मोदकं देहि, देव[2] इति। तच्छ्रुत्वा राजा संस्कृतभाषाया अज्ञानवशाद् मोदकमर्थाद् मिष्टान्नविशेषमानयितुं निरदिशत्। राज्ञ एतन्मौर्ख्याचरणेन राज्ञ्या भर्त्सितो राजा शर्ववर्मणे गुणाढ्ये च सर्वं वृत्तान्तमश्रावयद्, किञ्च अल्पकालेन स्वल्पायासेन च संस्कृतभाषाज्ञानं कथं स्यादित्युपायं पृष्टवान्। ततश्च शर्ववर्मा षण्मासेभ्यो राज्ञे व्याकरणमध्यापयिष्यतीति प्रतिज्ञां चक्रे। तदर्थं शर्ववर्मा कार्तिकेयाद् लघुकायं व्याकरणम् एकं प्रार्थयन् तपस्यां कुरुते स्म। कार्तिकेयः प्रसन्नः सन्नाविर्भूय वरं प्रादादुच्चारयामास च सिद्धो वर्णसमाम्नायः (कातन्त्रसूत्रम् १.१.१) इति आदिमं कातन्त्रसूत्रम्। तच्छ्रुत्वा शर्ववर्मणाऽपि मोहादुच्चार्यते स्म तत्र चतुर्दशादौ स्वराः (कातन्त्रसूत्रम् १.१.२) इति द्वितीयं सूत्रम्। तदा कार्तिकेयः क्रुद्धः सन्नकथयद् भवता सूत्रम् उच्चार्य मम कार्ये विघ्न उत्पादितो नोचेद् मन्मुखाद् निर्गतं व्याकरणम् इदं भाविनि काले पाणिनीयव्याकरणस्योपमर्दकं स्याद् इति। ततश्च क्रोधशमनानन्तरम् आश्वासितम् एतेनैव तव इष्टसिद्धिः भवेत्, स्वल्पकायं चेदं व्याकरणं पाणिनीयव्याकरणात् परं द्वितीयं स्थानम् अवाप्स्यतीति। अत

[1] आन्ध्रप्रदेशीयः कश्चन राजा शर्ववर्माख्यः आसीदिति (शिष्यहितन्यासः, पृ. १२)

[2] मोदकैर्देव परिताडय इति (शिष्यहितन्यासः, पृष्ठ. १२), मोदकैर्मां ताडय (जानकीप्रसादद्विवेदिनः कातन्त्रव्याकरणम्, पृ. ३)

एव लघुकायत्वाद् व्याकरणम् इदं कातन्त्रव्याकरणनाम्ना[३] कार्तिकेयप्रसादेन लब्धत्वात् तद्वाहनमयूरस्य पुच्छस्य नाम्ना कालापकनाम्ना च प्रसिद्ध्यति इत्येवं लोककथा कथासरित्सागरे उपन्यस्ता[४] वर्तते।

## २. कातन्त्रव्याकरणस्य नामान्तराणि

कातन्त्रव्याकरणं पुरा सम्पूर्णे भारतवर्षे विस्तृतम् आसीत्। अधुना चानेकैः स्रोतोभिः उपलब्धं तस्मात्तस्य नैकानि नामानि प्राप्यन्ते। तद् अत्र क्रमेणालोचयामः–

**२.१. कातन्त्रम्**– तन्त्यन्ते शब्दा अनेनेत्यर्थे तन्त्रशब्दो निष्पन्नः, कु अर्थाद् ईषत्तन्त्रम् इति कातन्त्रम्। अत्र का त्वीषदर्थेऽक्षे (कातन्त्रसूत्रम् २.५.२५) इति सूत्रेण कुशब्दस्य कादेशो भवति। तस्मात् कातन्त्रं नाम संक्षिप्तम् इति। पाणिनीयव्याकरणापेक्षया अस्मिन् व्याकरणे सूत्राणां न्यूनत्वात्तदपेक्षया संक्षिप्तम् इति हेतोः कातन्त्रम् इति नाम यथार्थं भाति। अथवा पुराकाले व्याकरणस्य कश्चन दीर्घकायो ग्रन्थ आसीत्तदनु शर्ववर्मणैषो लघुकायग्रन्थो विरचितोऽतः कातन्त्रम् इति नाम जातमस्य। अथवा सुकुमारमतिनां सहजतया अल्पायासेन व्याकरणज्ञानं यथा स्यात्तदर्थं विरचितम् इदं कातन्त्रव्याकरणम् इति केषाञ्चिन्मतम्।

**२.२. कालापकम्**– कातन्त्रव्याकरणस्य अधुनातनकाले तु कलापं, कालापकम् अथवा कलापकम् इत्यपि नाम श्रूयते। अस्य प्रधानं कारणं तावद्वङ्गलिप्यां लिखितं दुर्गादिवृत्तिसहितकातन्त्रव्याकरणं कालापकनाम्ना क्वचिच्च कलापकनाम्ना प्राप्तं, तस्य चाष्टादशशकाब्दात् प्रागेव अष्टौ संस्करणानि प्रकाशितानि। ततोऽस्य कलापकं कालापकञ्च नाम जातम्। अथ कथासरित्सागरानुसारेण कार्तिकेयप्रसादलब्धत्वात्तस्य वाहनमयूरस्य पुच्छस्य अर्थात्कलापस्य इदं व्याकरणम् इति श्रूयमानत्वादस्य कलापकं नाम जातमित्यपि उच्यते कैश्चिद्विद्वद्भिः।

कलापशब्दस्य संग्रहार्थोऽपि वर्तते, तेनानेकव्याकरणानां समाहारः कातन्त्रे क्रियत इत्यतोऽस्य कलापव्याकरणम् इति नाम प्रदत्तमित्यपि केचन वदन्ति।

श्रीमतः भगवद्दत्तस्य[५] मते तु काशकृत्स्नव्याकरणस्य नामान्तरं शब्दकलापम्, तस्य संक्षेपरूपत्वादस्य कातन्त्रव्याकरणस्य कलापकव्याकरणं नाम जातम्।

---

३ “अधुना स्वल्पतन्त्रत्वात् कातन्त्राख्यं भविष्यति” (कथासरित्सागरे १। ६-७ श्लोकाः)

४ कथासरित्सागरस्य षष्ठतरङ्गे १०-१३ श्लोकाः

५ व्याकरणशास्त्रेतिहासः, वैदिकयन्त्रालयः, अजमेरप्रकाशनम्

सूत्राच्च कोपधात् (अष्टाध्यायी ४.२.६५) इति सूत्रभाष्ये भाष्यकारेणाऽपि कालापकशब्दस्य उल्लेखः कृतः, परन्तु तत्र संशयोऽस्ति कालापकशब्दो वैदिकवाङ्मयस्य उत व्याकरणविषये चर्चितम् इति। तस्मिन्नेव सूत्रस्य भाष्यव्याख्यानावसर उद्योतकारेण भणितम्– कलापिना प्रोक्तम् अधीते इति कलापाः, तेषाम् आम्नाय इति कालापकम्[६] इति। तेनास्य व्याकरणस्य कलापिप्रोक्तत्वं सूच्यते, अर्थात् केनचित् कलापिनाम्ना महर्षिणा व्याकरणम् इदं ग्रथितम् इति ऊह्यते। जैनमते तु कलापी नाम मयूरः, तस्मात् कथासरित्सागरानुसारेण तत्सङ्गतं भवति । कस्यचिद् दक्षिणभारतीयविदुषः मतं वर्तते यत् कलापी नाम शिवः, तेन शिवप्रसादाल्लब्धं व्याकरणम् इदम्।

२.३. **कौमारम्**– संस्कृतव्याकरणस्य वाङ्मये कातन्त्रव्याकरणस्य स्थाने कौमारव्याकरणम् इति नाम्नापि व्यवहारो दृश्यते। अस्य कौमारव्याकरणाभिधेयं तु शिवपुत्रस्य कुमारकार्तिकेयस्याऽनुकम्पया लब्धत्वाज्जातमित्यत्र न कस्याऽपि संशयः।

केषाञ्चन मतं विद्यते यत् कुमाराणाम् अर्थाद् बालकानां कृते व्याकरणम् इदम् इत्यतोऽस्य व्याकरणस्य कौमारव्याकरणं नाम अभूद् इति।

आङ् मर्यादाभिविध्योः (अष्टाध्यायी २.१.१३), आङ् मर्यादावचने (अष्टाध्यायी १.४.८९) इति पाणिनीयसूत्रयोः व्याख्यानावसरे काशिकायां महाभाष्ये च आकुमारं यशः पाणिनेः इत्युदाहरणम् उपस्थापितम्। तेन पुरा कुमाराख्यः कश्चन महान् वैयाकरणः प्रसिद्ध आसीत्तस्यैव कृतिरूपेण व्याकरणम् इदं समुपलभ्यत इति कैश्चिद्विद्वद्भिः अङ्गीक्रियते।

किञ्च कुमार्या ब्राह्म्याः सरस्वत्या आगतम् इति कौमारम् इति व्युत्पत्तिं स्वीकृत्याऽस्य कौमारव्याकरणं नाम सञ्जातमित्यपि मतं प्रचलितं वर्ततेऽस्मिन्विषये।

जैनानां मतानुसारेण कुमारो नाम ऋषभदेवः, तेन विरचितं व्याकरणं कौमारव्याकरणम् इति। परन्तु मतम् इदं कैश्चित्खण्डितं विचारणीयञ्च वर्तते।

मध्येशियायां कस्मिंश्चित् स्थले कातन्त्रव्याकरणस्य जीर्णा काचन प्रतिलिपिः प्राप्ता, तस्यां पुष्पिकाद्वये कुमारलातस्य नाम प्राप्यते। अत एव कुमारलातेन विरचितम् इदं व्याकरणं कौमारनाम्ना प्रसिद्ध्यत इत्यपि मतं श्रूयते।

एतद्विहायापि कातन्त्रव्याकरणस्य शार्ववर्मकम्, दौर्गसिंहम्, दुर्गसिंहीयमित्यपि नाम अस्तीति केचन मन्यन्ते।

---

६ नागेशविरचिते उद्योतग्रन्थे

## ३. कातन्त्रव्याकरणस्य वैशिष्ट्यम्

कातन्त्रव्याकरणस्य प्रधानवैशिष्ट्यं भवति पाणिनीयादिव्याकरणापेक्षया लघुत्वम्। चतुःसहस्रसूत्रात्मकं पाणिनिकृतं व्याकरणं सूत्रभाष्यवार्तिकद्वारा निबद्धम् अस्ति। तन्मन्दमतीनां कृते किञ्चित्क्लेशकरं प्रतिभाति। तस्मात्सुकुमारमतीनां स्वल्पायासेन संस्कृतभाषाज्ञानार्थं निर्मितम् इदं चतुर्दशशतात्मकं कातन्त्रव्याकरणम्। शर्ववर्मणा कृतेऽस्मिन् व्याकरणे सन्धिनामाख्यातम् इति प्रकरणत्रयम् आसीत् परं केनचित् कृदाख्यं चतुर्थप्रकरणं संयोजितम्। अस्मिन् प्रकरणचतुष्टये पादव्यवस्था समाना नास्ति यथा पाणिनिविरचितायामष्टाध्याय्यां दृश्यते। आचार्यः शर्ववर्मा मोदकं देहि इति वाक्यमाधारीकृत्य व्याकरणस्यास्य अध्यायभेदं चकार। मोदकमित्यत्र मा उदकम् इति सन्धिविच्छेदः भवतीति हेतोः सर्वप्रथमं सन्धिप्रकरणम् उपन्यस्तम्। ततो उदकम् इति स्वाद्यन्तपदस्य वर्तमानाद् द्वितीयेऽध्याये नामपदविषयकं वर्णनं कृतम्। एवञ्च तत्पश्चाद् देहीति क्रियापदत्वात् तृतीयेऽध्याय आख्यातविषयान् अवर्णयत्। अन्तिमश्चतुर्थोऽध्यायस्तु वररुचिना विरचित इति मन्यन्ते अनेके विद्वांसः। सन्ध्याख्ये प्रथमे प्रकरणे पञ्चसु पादेषु स्वर-व्यञ्जन-प्रकृतिभाव-अनुस्वार-विसर्गसन्धिविषयकसूत्राणि न्यस्तानि। नामचतुष्टयाख्ये द्वितीये प्रकरणे षट् पादाः सन्ति, अत्र षड्लिङ्ग-कारक-समास-तद्धितप्रकरणानां सङ्कलनं कृतमित्यतोऽस्याध्यायस्य नामचतुष्टयाख्या वर्तते। आख्यातप्रकरणेऽष्टौ पादाः, कृदाख्येऽन्तिमे प्रकरणे षट् पादाश्च सन्ति[७]। एवं पाणिनीयव्याकरणम् एव संक्षिप्य स्वल्पमतीनां राजपुत्रादीनां संस्कतभाषाज्ञानप्रदानाय शर्ववर्मणा ग्रथितं कातन्त्राख्यं व्याकरणम्।

## ४. कातन्त्रसूत्रकारः शर्ववर्मा

अस्य कातन्त्राख्यव्याकरणस्य प्रणेतृरूपेण आचार्यशर्ववर्मणो नाम प्राप्यते। कथासरित्सागरोक्तश्लोकानुसारेणऽयं विद्वान् आन्ध्रप्रदेशीयस्य सातवाहनाख्यस्य राज्ञो मन्त्री गुणाढ्यसमकालिकश्च आसीत्। भावसेन त्रैविद्याख्यः कश्चन पण्डितः स्वकीये कातन्त्ररूपमालानामके ग्रन्थे लिखति श्रीमच्छर्ववर्मजैनाचार्यप्रणीतं कातन्त्रव्याकरणम्[८] इति तेनासौ सूत्रकारः शर्ववर्मा जैनधर्मीयः कश्चन वैयाकरण आसीदिति ज्ञायते।

संस्कृतसाहित्ये कातन्त्रव्याकरणस्य रचनाकालविषये तथा प्रत्यक्षप्रमाणं

---

[७] दुर्गसिंहकृतवर्गीकरणम्

[८] भावसेनत्रैविद्यविरचिते कातन्त्ररूपमालाग्रन्थे

न प्रदत्तं कैश्चिदपि। तथापि केचन विद्वांसः प्रयासं विहितवन्तः। यथा पूर्वं कथितमान्ध्रप्रदेशीयस्य राज्ञः सातवाहनस्य संस्कृतज्ञानप्रदानाय शर्ववर्मणा विरचितं, तत्र पाश्चात्यपण्डितस्य ए. स्मिथमहोदयस्य मते राज्ञः सातवाहनस्य कालः आसीद् ईशवीयप्रथमशतकम् इति। तस्मात् शर्ववर्मणोऽपि स एव कालो वर्तत इति केचन विद्वांसः।

भगवद्दत्तस्तु शुद्रकविरचिते प्राभृतकभाणाख्ये पद्ये कातन्त्रशब्द उल्लिखितः[९]।तेन शुद्रकसमकालिकः सातवाहन इति कृत्वा कातन्त्रव्याकरणस्य रचना विक्रमात्पञ्चशतकात्पूर्वं जातम् इति उद्घोषयति।

पण्डितयुधिष्ठिरमीमांसका महाभाष्ये कलापशब्द उदाहृत इत्यतो महाभाष्यात् पूर्वम् एव कातन्त्रव्याकरणस्य आविर्भावो जात इति अङ्गीकुर्वन्ति, तन्मते कातन्त्रव्याकरणस्य रचनाकालो विक्रमात् १५०० वर्षः प्रागेव इति।

अद्यावधि प्राप्तासु कातन्त्रव्याकरणस्य वृत्तिषु दुर्गसिंहवृत्तिरेव प्राचीना इति सिद्धान्तितं सर्वैरेव विद्वद्भिः, तस्मात्तदाधारीकृत्य कातन्त्रव्याकरणस्य रचनाकाल ईशा प्रथमशतकम् एव ग्रहणयोग्यं प्रतिभातीत्यत्रैव सर्वेषां सम्मतिः।

## ५. कृत्सूत्राणां रचयिता वररुचिः

कातन्त्रव्याकरणस्य सन्धिनामाख्यातरूपाध्यायत्रयेण शर्ववर्मणा ८५५ सूत्राणि विरचितानि। कृदाख्योऽन्तिमोऽध्यायस्तु वररुचिकात्यायननामकेन केनचिदाचार्येण ग्रथितः। शर्ववर्मणा कृदन्तशब्दानां वृक्षादिशब्दवद् रूढत्वं स्वीकृत्य तत्कृते सूत्राणि न प्रणीतानि। तस्मादेव दुर्गवृत्तौ प्रतिज्ञातम्–

वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः।
कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये॥[१०] इति।

कात्यायनोऽयं वररुचिः राज्ञः विक्रमस्य सभासद् आसीत्, न तु पाणिनीयव्याकरणस्य वार्तिककारः, न वा शुक्लयजुःप्रातिशाख्यकारः कात्यायनोऽसौ। कविराजसुषेणविद्याभूषणेन कातन्त्रव्याकरणस्याऽयं कात्यायनः एकदेशीयो वररुचिः इति उद्घोषितम्। कलापचन्द्रकारेण स्वग्रन्थे

---

[९] एषोऽस्मि बलिभुग्भिरिव संघातवलिभिः कातन्त्रिकैरिवावस्कन्दित इति।
हन्तप्रवृत्तं काकोलूकम्, सखे दिष्ट्या त्वामलूनपक्षं पश्यामि।
किं ब्रवीषि का चेदानीं मम वैयाकरण-पारशवेषु कातन्त्रिकेष्वास्था॥ इति शुद्रकोविरचिते प्राभृतकभाणे

[१०] दुर्गसिंहकृतवृत्तिग्रन्थे

तृनादिकृत्प्रत्ययानां प्रणेता वररुचिरेवेति प्रोक्तम्। तस्य मतेन वररुचिः शर्ववर्मा च समानः एव।

युधिष्ठिरमीमांसकानां मते तु महाराजविक्रमस्य पुरोहितेन कात्यायनगोत्रजेन वररुचिना कृदन्तभागस्य रचना कृता, ततो वररुचिनामकेन केनचिदन्येन कृत्सूत्राणां वृत्तिः लिखिता। वररुचिप्रणीता वृत्तिः दुर्घटनामकेन प्रसिद्धा।

**६. कातन्त्रवृत्तिकारो दुर्गसिंहः**

सम्प्रति उपलभ्यमानेषु कातन्त्रवृत्तिग्रन्थेषु दुर्गसिंहकृता वृत्तिरेव प्राचीना, प्रामाणिकी च भाति। कातन्त्रिकदौर्गसम्प्रदायस्य आदिपुरुषोऽयं वृत्तिकारो दुर्गसिंहोऽतिशयेन प्रतापान्वितो बभूव। न केवलं कातन्त्रसूत्राणां वृत्तिरचनयाऽपि तु सर्वतोभावेन व्याकरणस्यास्य मण्डनं कृतमनेनाचार्येण। क्वचित् सूत्राणां उदाहरणप्रत्युदाहरणद्वारा क्वचिच्च सूत्राणां दौर्बल्यप्रदर्शनेन सूत्रपरिवर्तनम् अपि एतेन कृतम्। अस्मिन् व्याकरणे दुर्गसिंहस्य प्रभाव एतावन्नासीद् यदस्य व्याकरणस्य क्वचिद् दौर्गव्याकरणम् इति नाम्नाऽपि विस्तारो जातः कदाचित्। अस्य प्रमाणभूतेन कातन्त्रव्याकरणे दौर्गसम्प्रदायो विनिर्मित इति निश्चयेन वक्तुं शक्यते। दुर्गसिंहस्य जीवनवृत्तान्तविषये विशेषेण न किम् अपि प्राप्यते। अस्याविर्भावकालविषये विचक्षणेषु वहुधा विचारा दृश्यन्ते। दुर्गसिंहेन स्वविरचितवृत्तौ भारवेः मयुरकवेश्च काव्यादुद्धरणं कृतम्। काशिकायां वामनेनाऽपि दुर्गसिंहीयं मतं खण्डितम्। एतेनास्य आविर्भावकालः सप्तमशतकाद् अष्टमशतकस्य मध्यभागः स्वीक्रियते। दुर्गसिंहस्य कृतिषु कातन्त्रव्याकरणस्य सूत्रवृत्तिः, उणादिसूत्रपाठः, परिभाषापाठः, धातुपाठश्च प्रसिद्धा आसन्। वस्तुतः कातन्त्रव्याकरणस्य विस्तारे दुर्गसिंहस्यावदानं महद् वर्तत इत्यत्र न कस्यापि विमतिः दृश्यते।

**७. कातन्त्रव्याकरणस्य संस्करणद्वयम्**

प्राचीनकाले भारते तिब्बतलङ्काप्रभृतिस्थलेषु यद्यपि कातन्त्रव्याकरणस्य न्यूनाधिक्येन प्रचलनम् आसीत् तथापि भारतस्य स्थलद्वये अस्य विशेषेण समृद्धिः जाता । प्रथमतः वङ्गप्रदेशे अस्य विस्तारः सम्यग्रूपेण जातः, किञ्च काश्मीरप्रदेशे अस्य विकाशः परिलक्षितः तस्मात् अधुना अस्य व्याकरणस्य बङ्गप्रदेशीयं, काश्मीरप्रदेशीयम् इति संस्करणद्वयम् उपलभ्यते । तयोः संक्षेपेण आलोचनं क्रियते अधः–

**क. बङ्गप्रदेशीयसंस्करणम्**

बङ्गदेशेऽस्य व्याकरणस्य प्रसारः कदा आरब्ध इति प्रश्नस्योत्तरं त्विदमित्थं प्रकारेण न निर्णीतोऽधुनापि। परन्तु इदं वक्तुं शक्यते यद्

बहुप्राचीनकालादेव बङ्गे कातन्त्रव्याकरणस्य विस्तारो जातः। अस्य प्रमाणं तावत्प्राप्यते कातन्त्रव्याकरणस्य विभिन्नेषु व्याख्यानग्रन्थेष्वेव। अष्टादशशतकस्योत्तरार्धे डॉ० जुलियास-इंग्लिगमहोदयेन, किञ्च एशियाटिकसोसाईटि अफ बेङ्गल इति संस्थया बङ्गदेशे कातन्त्रव्याकरणस्य सर्वप्रथमं देवनागरीलिप्यां प्रकाशनं कृतम्। तदनु बङ्गलिप्यामनेकटीकासहितं कातन्त्रव्याकरणं श्रीमता गुरुनाथविद्यानिधिभट्टाचार्येण कलापव्याकरणनाम्ना प्रकाशितम्। इत्थं प्रकारेण बङ्गप्रदेशेऽष्टादशशतक एव कातन्त्रव्याकरणस्य दौर्गवृत्त्याद्यनेकटीकासहितस्य बङ्गलिप्यामष्टौ संस्करणानि प्रकाशितानि, एतेनैव ज्ञायते तदानीन्तनकाले बङ्गप्रदेशेऽस्य कियान्प्रसार आसीदिति। कविराजः, गोपीनाथतर्काचार्यः, श्रीपतिः, त्रिलोचन इत्यादयो बङ्गदेशीया विद्वांसः कातन्त्रव्याकरणस्योपसकरूपेण प्राप्यन्ते।

**ख. काश्मीरप्रदेशीयसंस्करणम्**

प्राचीनकालादेव भारतीयसंस्कृतेः शिक्षणस्य प्रमुखकेन्द्ररूपेण काश्मीरप्रदेशोऽग्रगण्य आसीद्। तस्मादेवेह पाणिनीयव्याकरणेन सह कातन्त्रव्याकरणस्यापि प्रसारः सम्यग् जातः। अत्र कातन्त्रव्याकरणस्य अस्तित्वे सर्वप्रथमं प्रमाणं प्राप्यते अल्बेरूनेः अल्बेरूनीज इण्डिया इत्याख्ये ग्रन्थे। अस्मिन् ग्रन्थ उग्रभूतिभट्टविरचितशिष्यहितवृत्तेः पाठाभ्यास उल्लिखितः। उग्रभूतेः अपरः कश्चन ग्रन्थः शिष्यलोकन्यासाख्यः काश्मीरसंस्करणे गण्यते। तद्विहाय जगद्धरभट्टस्य बालबोधिनीवृत्तिः, तदुपरि न्यासग्रन्थः, छुछ्छुकभट्टविरचितो वृत्तिग्रन्थश्चास्मिन् संस्करणे बाहुल्येन कातन्त्रव्याकरणस्य प्रचारे सहायका जाताः। उग्रभूतेः कालानुसारेण वक्तुं शक्यते प्रायो दशमशतके काश्मीरप्रदेशे कातन्त्रव्याकरणस्य प्रसारो जात इति।

**८. पाणिनीयकातन्त्रव्याकरणयोः भेदस्थलानि**

पाणिनीयव्याकरणं कातन्त्रव्याकरणं च विचार्यते चेद् अनयोः परस्परभेदः प्राप्यते, तस्य स्वरुपगतेन तथ्यगतेन च विभागः कर्तुं शक्यते। तदधः पश्यामः–

**अ. स्वरूपगतभेदाः–**

I. पाणिनिकृते त्रिमुनिव्याकरणे प्रायः चतुःसहस्रसंख्यकानि सूत्रकुसुमाणि सन्ति, अपरत्र शर्ववर्मकृत ईषत्तन्त्ररूपेऽस्मिन् कातन्त्रव्याकरणे चतुर्दशशतसंख्यकानि सूत्राणि प्राप्यन्ते।
II. पाणिनिकृतोऽष्टाध्यायीग्रन्थोऽध्यायचतुष्टयेन विभक्तः, तत्रापि

प्रत्येकमध्याये चत्वारः पादाः सन्ति। कातन्त्रव्याकरणे सन्धिनामाख्यातकृदाख्यानि चत्वारि प्रकरणानि सन्ति, तत्र प्रत्येकं प्रकरणे पादसंख्या न समाना।

III. पाणिनीयव्याकरणस्य आधारभूतोऽष्टाध्यायीग्रन्थ एकेनैव लेखकेन लिखितः, परन्तु कातन्त्रव्याकरणस्य सन्धिनामाख्यातानि इत्येतानि त्रीणि प्रकरणानि शर्ववर्मणा प्रणीतानि, अन्तिमं कृदाख्यप्रकरणं तु वररुचिना अथवा केनचिद् अन्येन परं योजितम् इति विश्रुतिः।

IV. पाणिनीयव्याकरणं तु शिवप्रसादात् पाणिनिना प्राप्तम् इति प्रसिद्धिः विराजते। ततश्च भणितं नन्दीश्वरकृतवृत्तौ–

नृत्तावसाने नटराजराजो ननाद ढक्कां नव पञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धान् एतद्विमर्शे शिवसूत्रजालम्॥ इति [११]

परन्तु कातन्त्रव्याकरणं शिवपुत्रेण कार्तिकेयेन शर्ववर्मणे प्रदत्तम् इति कथा लभ्यते।अत एव कौमारव्याकरणमित्यपि अभिधानं कातन्त्रव्याकरणस्येति प्रायः सर्वजनविज्ञातम् एव।

**आ. तथ्यगतभेदाः–**

पाणिनीयव्याकरणकातन्त्रव्याकरणयोः प्रयोजनात्मकभेदो दृश्यते। पाणिनीयव्याकरणं तु “रक्षोहागमलघ्वसंदेहाः प्रयोजनम्” इत्यादिना वेदानां रक्षार्थम् एव विरचितमत एवात्र वैदिकलौकिकोभयविधशब्दानाम् अन्वाख्यानं विहितम्। परन्तु कातन्त्रव्याकरणस्य रचनायां मुख्यम् उद्देश्यम् आसीद् राज्ञः सातवाहनस्य सहजतया लौकिकसंस्कृतभाषाया ज्ञानप्रदानम्, अथवा इदं वक्तुं शक्यते सामान्यजनानां संस्कृतभाषाशिक्षणम् एवाऽस्य व्याकरणस्य मुख्यं प्रयोजनम् आसीदिति। तस्मादेव अत्र वैदिकशब्दानां विषयकज्ञानं नासीत् परम् इष्ट्यादिरूपेण कैश्चिद् योजितम्। अथ च केचन बिन्दवोऽध उल्लिख्यन्ते–

I. पाणिनीयव्याकरणे वर्णलाघवाय प्रत्याहारशैली यथा दृश्यते तथा कातन्त्रव्याकरणे न परिलक्ष्यते परन्तु तत्तत्स्थाने वर्णा एव उल्लिखिता दृश्यन्ते।

II. पाणिनीयव्याकरणे यथा - अ + इ = ए, अ + उ = ओ, अ + ऋ = अर्, अ + ऌ = अल् इत्यादीनां वर्णानां सन्धिकरणाय

[११] वैयाकरणसिद्धान्तकौमुद्या बालमनोरमाटीकायाम्, पृ.- ४

आद् गुणः (अष्टाध्यायी ६.१.८७), उरण रपरः (अष्टाध्यायी १.१.५१) इत्यादिव्यवस्था कृता, कातन्त्रव्याकरणे तु अवर्ण इवर्णे ए (कातन्त्रसूत्रम् १.२.२), उवर्णे ओ (कातन्त्रसूत्रम् १.२.३), ऋवर्णे अर् (कातन्त्रसूत्रम् १.२.४), लृवर्णे अल् (कातन्त्रसूत्रम् १.२.५) इत्यादिसूत्रेण व्यवस्था कृता वर्तते। ततश्च कातन्त्रे सूत्रगौरवं दृश्यते। एवञ्च पाणिनीयव्याकरण अयादिसन्धिविधानाय एचोऽयवायावः (अष्टाध्यायी ६.१.७८) इत्येकम् एव सूत्रं कृतं, कातन्त्रव्याकरणे तु ए अय् (कातन्त्रसूत्रम् १.२.१२), ओ अव् (कातन्त्रसूत्रम् १.२.१३), ऐ आय् (कातन्त्रसूत्रम् १.२.१४), औ आव् (कातन्त्रसूत्रम् १.२.१५) इति पृथक्तया चत्वारि सूत्राणि कृतानि।

III. एतदतिरिच्यापि अनयोः व्याकरणयोः प्रयुक्तसंज्ञानां धातूनां च प्रभेदा दृश्यन्ते। पाणिनीये यथा प्रातिपदिकसंज्ञा वर्तते, तथा अत्र कातन्त्रे लिङ्गसंज्ञा कृता। पाणिनीये यथा भ्वाद्यदादिदशगणाः प्रोक्ता अत्र तु अवान्तरगणा उद्भाविताः।

IV. पाणिनीयव्याकरणे वर्तमानादिकालवाचका लडादयो दश लकारा विहिताः, कातन्त्रे तत्स्थाने सप्तमी, पञ्चमी, ह्यस्तनी, श्वस्तनी इत्येवं संज्ञाः प्रणीताः।

## ९. कातन्त्रव्याकरणस्य कतिपयग्रन्थाः

विंशतिशतकस्य पूर्वभागपर्यन्तं भारतवर्षे कातन्त्रव्याकरणस्य पठनं बाहुल्येन आसीत्, तत्रापि विशेषेतो बङ्गप्रदेशे, काश्मीरप्रदेशे च। अत एवास्य काश्मीरशाखा, बङ्गशाखा च भेदो जातः। बङ्गशाखायां कातन्त्रव्याकरणस्य बङ्गलिप्यां देवनागर्यां वा ग्रन्थाः प्राप्ता अतस्तेषां वर्तमानकाले प्रकाशनं जातं परन्तु काश्मीरशाखायाः केचन गन्थाः शारदालिप्यां प्राप्तास्तस्मात्तेषां सर्वेषां प्रकाशनं तथा न जातं, तदुपरि च कार्यमधुना प्रचल्यमानं वर्तत इति श्रूयते। भारतस्य दक्षिणप्रान्ते मध्यभागे चास्य व्याकरणस्य पाठ आसीत्ततोऽपि ग्रन्थाः प्राप्यन्ते। कातन्त्रव्याकरणस्य प्रसिद्धा ग्रन्था अध उल्लिख्यन्ते –

**काश्मीरसंस्करणे प्राप्तग्रन्थाः**

| ग्रन्थनाम | ग्रन्थकर्ता | प्राप्तिस्थानम्/प्रकाशनस्थानम् |
|---|---|---|
| शिष्यहितन्यासः | उग्रभूतिभट्टः | भण्डारकर-प्राच्य-विद्या-शोध-संस्थानम्,पुना |
| शिष्यहितावृत्तिः | उग्रभूतिभट्टः | ,, |

| | | |
|---|---|---|
| बालबोधिनीवृत्तिः | जगद्धरभट्टः | रणवीर-संस्कृतानुसंधान-पुस्तकालयः, जम्मू राजकीय-अनुसंधान-पुस्तकालयः,श्रीनगरम् |
| बालबोधिनीन्यासः | शितिकण्ठः | ,, |
| कातन्त्रलघुवृत्तिः | छुछ्छुकभट्टः | ,, |
| कातन्त्रकौमुदी | कृपालुकोकिलः | ,, |
| लघुललितवृत्तिः | जगद्धरभट्टः | प्राच्यविद्या-प्रतिष्ठानम्, जोधपुरम् |

**वङ्गीयसंस्करणे प्राप्तग्रन्थाः**

| **ग्रन्थनाम** | **ग्रन्थकर्ता** | **प्राप्तिस्थानम्/प्रकाशनस्थानम्** |
|---|---|---|
| कातन्त्रम् (दुर्गवृत्तिसहितम्) | सम्पादकः- जूलियास इग्लिंग | एशियाटिक-सोसाईटि-अफ-बेङ्गल,कलिकाता |
| कलापव्याकरणम् (दुर्गसिंहवृत्त्या-द्यनेकटीका-सहितम्) | सम्पादकः- श्रीगुरुनाथ-विद्यानिधि-भट्टाचार्यः | जानकीनाथ-काव्यतीर्थ-एण्ड-ब्रदर्स, छात्रपुस्तकालयः, निवेदिता लेन, बागवाजार, कलिकाता |
| कृद्वृत्तिः | ,, | ,, |
| बृहत्कातन्त्रमाला | ,, | ,, |
| कलापव्याकरणम् (पूर्वार्धम्) | ,, | ,, |
| कातन्त्रपरिशिष्टम् | लेखकः- श्रीपतिदत्तः, सम्पादकः- श्रीगुरुनाथ-विद्यानिधि-भट्टाचार्यः | ,, |
| कातन्त्रविस्तरः | वर्द्धमानाचार्यः | सरस्वतीभवनम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी |

## अन्यग्रन्थाः

| ग्रन्थनाम | ग्रन्थकर्ता | प्राप्तिस्थानम्/प्रकाशनस्थानम् |
|---|---|---|
| कातन्त्ररूपमाला | श्रीभावसेनत्रैविद्यः | जैन-साहित्य-प्रचारक-कार्यालयः, हीराबागः, चिरगांव मुम्बई, १९२७ |
| कातन्त्रव्याकरणम् | आर.एस.सैनी | भारतीय-विद्या-प्रकाशनम्, दिल्ली |
| कातन्त्रपरिभाषा-सूत्रवृत्तिः | श्रीभावमिश्राचार्यः | भण्डारकर-प्राच्य-विद्या-शोध-संस्थानम्, पुना |

## उपसंहारः

ततश्च सूत्रभाष्यवार्तिकसहितस्य पाणिनिव्याकरणस्यावगमनाय सुकुमारमतीनां क्लेशोऽनुभूयतेऽतः स्वल्पायासेन सर्वेषां संस्कृतभाषाज्ञानार्थं चतुर्दशशतात्मकं कातन्त्रव्याकरणं विरचितम्। वैदिकस्वरप्रक्रियारहितं त्रिमुनिव्याकरणम् एव संक्षिप्य महर्षिः शर्ववर्मा लघुकायं व्याकरणम् इदं रचयामासेति सिद्धान्ते वक्तुं शक्यते। यद्यपि पाणिनीयापेक्षया कातन्त्रे कुत्रचित् सूत्राणामाधिक्यं दृश्यतेऽथापि क्वचित् दरीदृश्यते सूत्रकृतलाघवम् अपि। वस्तुतः संस्कृतभाषाज्ञानार्थं कातन्त्रव्याकरणम् अपि महदुपयोगि भवति संस्कृतानुरागिणां कृते, ये पाणिनीयभाष्यवार्तिकादिजाले बद्धा भवितुं नेच्छन्ति। शब्दानामन्वाख्यानं तु व्याकरणस्य कार्यम् एव, तत्पाणिनिप्रणीतं भवत्वथवा शर्ववर्मोक्तम्। तस्माच्छब्दसाधनाय कातन्त्रव्याकरणस्यापि समाश्रयणं कर्तुं शक्यतेऽस्माभिः, यथा कथितं– रूचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्[१२] इति।

✶ ✶ ✶

[१२] पुष्पदन्तविरचिते शिवमहिम्नस्तोत्रे श्लोकसंख्या -७

## Bibliography

1. *Kātantravyākaraṇam Vyākhyācatuṣṭayopetam*; Jānakī Prasāda Dvivedī (ed.); Sampurnanand Sanskrit University; Benaras; 1919 Śakābda
2. *Śiṣyahitānyāsaḥ*; Ugrabhūtabhaṭṭa; Rāmasāgara Miśra (ed.); Bhandarkar Oriental Research Institute; Pune; 1991
3. *Saṃskṛta Vyākaraṇa Śāstra Kā Itihāsa*; Yudhiṣṭhira Mīmāṃsaka; Ramlal Kapur Trust Press; Hariyana; 1984
4. *Kātantravyākaraṇam*; Harinārāyaṇa Tivārī (ed.); Chowkhamba Krishnadas Academy; Benaras; 2016
5. *Vaiyākaraṇasiddhāntakaumudī*; Bhaṭṭojidīkṣita; Giridhara Śarmā & Parameśvarānanda Śarmā (eds.); Motilal Banarasidas; Delhi; 2011

✳ ✳ ✳

# शास्त्रेषु प्रतिफलितस्य एकान्तधर्मस्य संक्षिप्तं विवेचनम्

**सुस्मितागोस्वामी***

**Abstract**

[In the *Mahābhārata*, we get a lot of discussion on *Ekāntadharma*. It seems to be the root of the *Pāñcarātras* that are followed by the *Vaiṣṇavas* in their rituals. But what does the word *Ekānta* mean? How is this connected to the four different paths (*Jñāna, Karma, Rājayoga* or *Bhakti*) to salvation? Is there any mention of *Ekāntadharma* in its contemporary *Gītā*? The paper tries to address these questions.]

सुप्राचीनाद् एव कालाद् आसमुद्रहिमाचलं भागवतधर्मो जनचित्तम् आन्दोलयति। दरिद्रकुटीरं संस्पृश्य धनाढ्यजनानां भवनेऽपि धर्मस्यास्य साधना प्रचलन्ती वर्तते। धर्मोऽयं वैष्णव-नारायणीय-पाञ्चरात्र-सात्त्वतादिविविधाभिः नामनिरुक्तिभिः परिचीयते। अस्य धर्मस्य विविधासु संज्ञासु एकान्तधर्मस्य प्रयोगः शास्त्रग्रन्थेषु विध्रियते। श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां शान्तिपर्वणि मोक्षधर्मे एकान्तीभावप्रतिपादकः अध्यायो वर्तते। विबुधानां नये भागवतधर्मस्य नारायणीय-सात्त्वता-दिष्वभिधासु विद्यमानासु अपि सामान्येन एकान्तधर्म इति नाम समाजे प्रचलितम् अस्ति। अत्र शङ्का– भागवतधर्मः एकान्तधर्मोऽथवा भगवदनुग्रहप्राप्तेरपर एको मार्गविशेषो वा? महामतिव्यासेनोद्गीयते। यथा–

एवम् एकं सांख्ययोगं वेदारण्यकम् एव च।
परस्पराङ्गान्येतानि पञ्चरात्रञ्च कथ्यते॥
एष एकान्तिनां धर्मो नारायणपरात्मकः॥” इति

[महाभारतम् १२/३३२/८१]

## एकान्तपदस्य निर्वचनम्

श्लोकस्यास्य पर्यालोचनाज् ज्ञायते भगवतो नारायणस्य महिम्ना

* सहायकाध्यापिका, संस्कृतविभागे, लेडि-ब्रैबोर्न-महाविद्यालयस्य, susmikol2012@gmail.com

सम्पूरिते धर्मेऽस्मिन् निगमागमभावनानां एकीभवनं सञ्जातम्। न वयं विस्मराम एतत् यत्, भारतीयानां धर्मचिन्तने साधनपरम्परायां संस्कृतौ च निगमागमभावनानां फल्गुधारा निरन्तरं प्रवाहिता भवति। व्यासवचनानुसारं धर्मोऽयं एकान्तिनां धर्म इति व्याख्यायते। धर्मस्यास्य मूलभूततत्त्वनिचया अपि श्लोकेनानेन स्पष्टीभवन्ति। यदि पदस्यास्य निर्वचनं क्रियते तर्हि एकस्मिन् अन्तो यस्य स एकान्त इति लभ्यते। एकस्मिन् अन्ते विषये वा यस्याभिनिवेशो वर्तते स एव एकान्ती। कोषग्रन्थे एकतानम् अनन्यवृत्तिः एकाग्रः एकायनम् इत्यादीनां पदानां प्रयोगो लक्ष्यते।[१] हरिदाससिद्धान्तवागीशभट्टाचार्येण प्रणीतायां भारतकौमुदीसमाख्यायां टीकायाम् एकान्ती इति पदेन निष्कामभक्ताः निर्दिश्यन्ते। तन्मतेन सांख्य-योग-वेदारण्यकसंज्ञानि ज्ञानानि अन्योन्यनिर्वाहकानीति। मुक्तिप्रयोजकं पाञ्चरात्रशास्त्रोक्तज्ञानञ्च एवम्प्रकारकम्। एष समुदायः खलु एकान्तिनां धर्मः। अत्र वेदारण्यकपदेन तत्त्वमसि इति महावाक्यप्रतिपादितम् अभेदज्ञानम् अवगम्यते।[२] अर्थात् एकान्तिनां धर्मे प्राचीनषड्दर्शनप्रस्थानानां ज्ञानानां पाञ्चरात्रशास्त्रोक्तानां ज्ञानानाञ्च समाहारोऽस्माकं नयनपथम् आयाति। ऐकान्तिकभावेन परमेश्वरस्याराधनम् एकान्तधर्मस्य मूलस्वरूपम् एव। तैत्तिरीयसंहिताया दशमप्रपाठके उच्चारिते विष्णुगायत्रीमन्त्रे समुद्गीतं भागवतधर्मस्य उपास्यदेवस्य समन्वयात्मकसत्तायाः स्वरूपम्।

वार्ष्णेयवासुदेवेनोद्गीतस्य धर्मस्यास्य देवपरम्परा आदित्यविष्णुं नारायणमधिकृत्य विकाशयति। अतो नारायणीयमोक्षधर्मे वर्णितो नारायणपरात्मक एकान्तिनां धर्म एष पुराणेषु वासुदेवभक्तिसम्पूरितधर्मरूपेण विवेच्यते। तत्र अनन्यमनसा वासुदेवे भक्तिः एकान्तिनां परमलक्ष्यम् एव। भागवतपुराणे भावोऽयम् इत्थं निगदितः–

वासुदेवे भगवति सर्वात्मनि परेऽमले।
एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्समः॥ इति।

[भागवतपुराणम् ९/२/११]

अतो वासुदेवं प्रति भक्तिः एकान्तभक्तिः इति कथ्यते। भगवन्तं प्रति भक्तिवशात् भागवतधर्मस्य अथवा सात्त्वतधर्मस्य अपरा अभिधा 'एकान्त' इत्यपि भवितुम् अर्हति। पूर्वं शङ्का उत्थापिता– भगवदनुग्रहप्राप्त्यर्थं साधनमार्गः एषः वा? प्रश्नस्यास्य समाधानसूत्रं छान्दोग्योपनिषदि लब्धुं

१ अमरकोषः, विशेष्यनिम्नवर्गः, पृ. ३११
२ महाभारतम् १२/३३२/८१, तत्र भारतकौमुदी टीका द्रष्टव्या।

शक्यते। तत्र नारद-सनत्कुमारसंवादे नारदेन पठितानां विषयसमूहानां मध्ये एकायनविद्याया उल्लेखो विहितः। प्रायः भागवतधर्मसाधनायाम् एकान्तमार्गस्य प्राचीनधारा काचिद् विद्यते। एकान्तधर्मस्य मूलतत्त्वं श्रीमद्भगवद्गीतायां महाभारतस्य नारायणीयमोक्षधर्मे पाञ्चरात्रागमसम्बद्धासु संहितासु च विव्रियते।

**एकान्तधर्मस्य कालविवेचनम्**

प्राचीननारायणीयधर्मस्य अधियज्ञरूपं शतपथब्राह्मणस्य पञ्चरात्रसत्रस्य वर्णनायां[३] परिलब्धम्। पण्डितानां नये ख्रिष्टपूर्वाष्टमे शतके ब्राह्मणास्यास्य सङ्कलनमभवत्।[४] Winternitz-महाभागस्य मतानुसारं ख्रिष्टपूर्वचतुर्थशतकाद् आरभ्य ख्रिस्टोत्तरचतुर्थशतकपर्यन्तं महाभारतस्य सङ्कलनम् अभवत्। महाभारतस्य शान्तिपर्वणि उद्गीतस्य नारायणात्मकस्य एकान्तिनां धर्मस्य मूलतत्त्वे यदि पाञ्चरात्रमतस्य समाहारो दृश्यते तर्हि एकान्तधर्मस्य प्राचीनत्वम् अनायासम् अनुमातुं शक्यते। अधुना संक्षेपेण एकान्तधर्मस्य स्वरूपविषये शास्त्रोक्तम् आलोचनं मया समुपस्थापयिष्यते।

**श्रीमद्भगवद्गीतायां सम्प्राप्तस्य एकान्तधर्मस्य साधनमार्गस्यान्वेषणम्**

एकान्तधर्मस्य मूलस्वरूपं श्रीमद्भगवद्गीतायां सारतो विचारितम्। एकान्तभावेन भगवच्छरणम् अधिगम्य तस्य अर्चनम् ऐकान्तिकधर्मरूपेण कथ्यते। अत्र भगवन्तं प्रति अन्यन्यभक्तिः सर्वतोभावेन च तस्य शरणगतिः एकान्तधर्मस्य मूलम् इति गीतावचनानां निविडाध्यायनाज् ज्ञायते। श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे गुणत्रयविभागयोगे भगवता उक्तं यो भगवन्तम् अव्यभिचारेण भक्तियोगेन सेवते स गुणान् समतीत्य ब्रह्मभूयाय कल्पते।[५] अत्रैकान्तिकसुखस्य परमाश्रयः हि स्वयं वासुदेवः। भगवतः शरणागतिरेव एकान्तधर्मस्य मार्गविशेषः। यम् एव आश्रित्य भक्ताः भगवन्तम् उपैति। तत्र राजविद्याराजगुह्ययोगे चास्य मार्गस्य मूलतत्त्वम् अनेनैव व्याख्यातम्–

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
माम् एवैष्यसि युक्त्वैवम् आत्मानं मत्परायणः॥ इति।

[श्रीमद्भगवद्गीता १४/२६]

अत्र एकान्तभावेन परमपुरुषस्य प्राप्तेः निर्देशो वर्तते। अन्यन्यभावेन

---

३ शतपथब्राह्मणे १३/६/१
४ अनिर्वाण, *साहित्य प्रसङ्ग*, पृ.४५
५ श्रीमद्भगवद्गीतायां १४/२६

चेतनायाम् ईश्वरस्य उपलब्धिः भवति। विज्ञानमयानन्दपुरुषम् अनन्यचित्तया एकान्तभावेन उपलभ्यते। इयम् एव राजविद्या, या गभीरा अन्तरङ्गत्वात् गुह्यतमा। श्लोकेऽस्मिन् कथ्यते, मननं भजनं यजनम् इति प्रवृत्तित्रयद्वारा एकान्तरूपेण आत्मनिवेदनात् तम् एव प्राप्नुते जनः। नारायणीयमोक्षधर्मानुसारम् एकान्तधर्मे योगस्य अन्तर्भावो भवति। भगवद्गीतापि योगशास्त्रतया विचार्यते। अस्य योगदर्शनस्य परमलक्ष्यम् एव चित्तवृत्तेर्निरोधः। विषयेषु प्रवर्तितस्य मनसः वृत्तिनिरोधात् जायते एकाग्रता। अभ्यासवैराग्याभ्यां योगसाधनं सम्पाद्यते। यस्मात् जायते एकाग्रता या एकान्तधर्मस्य बीजम्। बहुमुखं चित्तम् एकमुखं कृत्वा योगयुक्तमनसा परमेश्वरस्य उपासनम् एव धर्मस्यास्य मूलम् इति गीतावचनात् प्रतिपाद्यते। तत्र भगवता उक्तम्–

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ इति।

[श्रीमद्भगवद्गीता ९/३४]

श्लोकस्यास्य व्याख्यायां श्रीमन्मधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीताया गूढार्थदीपिकाटीकायां परिलक्ष्यते एतत्– "अहम् एव भगवान् वासुदेवः सर्वात्मा। न मद्व्यतिरिक्तं किञ्चिद् अस्तीति ज्ञात्वा तम् एव प्रत्यञ्चं सदा चिन्तयन्तो मां नारायणम् आत्मत्वेन ये जनाः साधनचतुष्टयसम्पन्नाः सन्न्यासिनः परि सर्वतोऽनवच्छिन्नतया पश्यन्ति ते मदन्यतया कृतकृत्या एवेति शेषः"[६] इति। गीतायाः विविधश्लोकनिचयेषु एकान्तमार्गस्य सूत्रं परिलभ्यते। तत्र अक्षरब्रह्मयोगाध्याये अनन्यचेताः सततं यो मां स्मरति नित्यशः [श्रीमद्भवगद्गीता ८/१४] इत्यत्र यावज्जीवनम् अनन्यचित्तेन भगवदनुचिन्तनम् एव योगिनां परमलक्ष्यम् इति कथ्यते। भागवतधर्मस्य अपरा अभिधा हि एकान्तधर्मः। धर्मस्यास्य उद्गात्रा वासुदेवेन सह परमपुरुष-नारायणस्य सत्ताया आदित्यविष्णोश्च सत्तायाः सम्मेलनं भवति। अतो वर्णाश्रमधर्मान् सामान्यधर्मान् परित्यज्य च परमानन्दमयो वासुदेवो भजनीयेतीति सर्वधर्मान् परित्यज्य माम् एकं शरणं व्रजेति श्लोकस्य मर्मार्थः। अत्र वासुदेवं प्रति अनन्यभक्तेः निदर्शनं गीतावचनस्य अन्यत्रापि दृश्यते। एकान्तधर्मस्य मध्ये सांख्यमतस्य औपनिषदभावनायाश्च सारः सन्निवेशितः भवति।

६ श्रीमद्भगवद्गीतायां ९/२२ इति श्लोकस्य गूढार्थदीपिका टीका

## नारायणीयमोक्षधर्मे व्याख्यात एकान्तधर्मः

महाभारते नारायणीयमोक्षधर्मे एकान्तधर्मेण सह सम्पृक्तानां भावनानां समाहारो दृश्यते। तत्र एकान्तिभाव इत्याख्यातेऽध्याये अस्य धर्मस्य आचार्यपरम्परा दार्शनिकतत्त्वविवेचनं पूर्णरूपेण निरूपितं वर्तते। जनमेजयस्य वचनानुसारं एकान्तिपुरुषाः परमं पदं गच्छन्ति। एकान्तधर्मस्य प्राणपुरुष एव नारायणः। यतो जनमेजयेनोक्तम्–

नूनम् एकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः।
अगत्वागतयस्तिस्रो यद्गच्छत्यव्ययं हरिम्॥ इति।

[महाभारतम् १२/३३२/४]

महाभारतानुसारं परमदेवस्य चतुर्विधेषु भक्तसमूहेषु एकान्तिनः श्रेष्ठतया परिगण्यन्ते। तत्र भगवतो वचनाद् ज्ञायते एकत-द्वित-त्रिताख्याता महर्षयः श्वेतद्वीपम् अधिगम्य भगवद्दर्शने असमर्थाः आसन्। किन्तु ऐकान्तिकोत्तमः ऐकान्तिकश्रेष्ठनारदः नारायणसान्निध्यं लभते स्म। अर्थात् नारायणपरात्मको धर्मोऽयं ऐकान्तिकभक्तेन धार्यते इत्यवगम्यते। नारायणीयमोक्षधर्मे परमभागवतस्य उपरिचरवसोः श्वेतद्वीपनिवासिनाञ्च माहात्म्यस्य ख्यापनावसरे एकान्तभावस्य एकान्तिनश्च प्रसङ्गः उत्थापितः। श्वेतद्वीपनिवासिनः जनाः पुरुषोत्तमम् एकान्तभावेन प्राप्नुवन्ति, अतो ते एकान्तिन इति कथ्यते। व्यासवचने विध्रियते यथा–

एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः। इति।

[महाभारतम् १२/३२२/३०]

नारायणस्य दर्शनप्रसङ्गे युधिष्ठिरस्य प्रश्नस्योत्तरे महामतिः भीष्मो यदेव कथितवान् तस्मात् महाकाव्यस्य उपाख्यानात् ज्ञायते क्षीरोदधेः उत्तरतो विद्यमाने श्वेतद्वीपे स्थिताः चन्द्रकान्तिसमानकान्तिविशिष्टा मानवा नारायणम् एकान्तभावेन उपगच्छन्ति। नारायणस्य उपासनार्थम् अनिन्द्रिया निराहारा अनिष्पन्दा सुगन्धिनो जनाः सूर्यकिरणमध्ये तिष्ठन्ति। यतः आदित्यभावनायां क्रमोत्तरणं भागवतधर्मस्य मुख्योद्देश्यम्। अतो नारायणस्य एकान्तभक्ताः सूर्यं प्रविशन्तीति उत्प्रेक्ष्यते इति मन्ये। एकान्तमार्गावलम्बिनाम् एतेषां श्वेतपुरुषाणां दर्शनेन हि भगवद्दर्शनं जातम् इति भारतवचने उपलब्धम्। नारायणपरः भूत्वा अनन्यचित्ततया भगवतः साधना एव अस्य धर्मस्य निहितार्थः। स्वयं नारदेन साक्षात् जगन्नाथात् सरहस्यो धर्म एष प्राप्तः। दुर्विज्ञेयस्य दुश्चरस्य च अस्य महतो धर्मस्य धारकाः खलु सात्त्वताः। नारायणीयमोक्षधर्मस्य पूर्णतया पठनाद् अचिन्त्यपुरुषस्य नारायणस्य

स्वरूपं पूर्णतया उपलभ्यते। सांख्ययोगदर्शनस्य समतुल्यः अयम् एव धर्मः। परमपुरुषस्य सूक्ष्मरूपं धर्मेऽस्मिन् प्रपञ्चितम्। आत्मानात्मविवेकसंयुक्तं सांख्यज्ञानं, चित्तवृत्तिनिरोधमूलको योगो, जीवब्रह्मणोरभेदमूलम् औपनिषदज्ञानं च अन्यभावेन च अस्यां धर्मसाधनायां प्राधान्यं लभते। यद्यपि धर्म एष दुश्चरः किन्तु सुप्रयुक्तेन कर्मणा सह आचरितेनानेन धर्मेण स्वयं हरिः प्रीतिं लभते। [७] वैशम्पायनेन एकान्तधर्मस्य उपास्यपुरुषस्य स्वरूपं कथितम्। धर्मोऽयं क्षेत्रज्ञ-निर्मम-निष्कलरूपस्य हरेः व्यूहतत्त्वसमन्वितः। परव्यूहविभावार्चारूपेण भगवतः चतुर्भिः रूपैः सह अन्तर्यामिरूपं संयोज्य पाञ्चरात्रागमेषु भगवतः पाञ्चरूप्यम् उक्तम्। एते व्यूहा जगत्सर्जनार्थं वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यान् चतुरो दिव्यदेहान् परिगृहीतवन्तः। अतो भगवतो नारायणस्य अवतारविशेषा एते। एकान्तधर्मो निष्कामाणां भक्तानां धर्मः, ये खलु जगति दुर्लभाः। तैः पूजितः देवः पुरुषविशेषः। महाकाव्यस्य पठनाज् ज्ञायते भगवान् वासुदेवः एव श्रीमन्नारायणः परब्रह्मेति। सर्वप्राणिषु विद्यमानः सर्वगुणातिगः पुरुषविशेषः। तस्य वर्णनायाम् एवम् आह–

मनश्च प्रथितं राजन्! पञ्चेन्द्रियसमीरणम्।
एष लोकविधिर्धीमान् एष लोकविसर्गकृत्॥
अकर्ता चैव कर्त्ता च कार्यं कारणम् एव च।
यथेच्छति तथा राजन्! क्रीडते पुरुषोऽव्ययः॥ इति।

[ महाभारतम् १२/३३२/५९-६०]

अस्माद् अवगम्यते जगदुदयप्रलयहेतुश्च स्वयं हरिः। नारायणीयमोक्षधर्मे दृढतया एकान्तसेवितधर्मोऽयं सांख्ययोगेन तुल्यः इति कथ्यते। अतः सांख्यशास्त्रोक्तस्य सत्त्वरजस्तमोगुणानां विवेचनम् अत्र अस्ति। सात्त्विक-राजस-तामस-देहिनाम् उल्लेखः अत्र विधीयते। एकान्तधर्मानुसारेण नारायणपरः सात्त्वतजनः तम् एव पुरुषं ज्ञात्वा मोक्षं लभते। एकान्तसेवितधर्माचरणेन हि जनाः नारायणात्मके मोक्षे प्रवेष्टुं शक्नोति। सांख्यज्ञानस्य वेदान्तमतस्य प्रभावः कथम् एकान्तधर्मे सन्निवेशितः भवतीति श्लोकाद् अस्माद् ज्ञायते। तत्र वैशम्पायनेनोक्तम्–

सुसूक्ष्मं सत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः।
पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकः॥ इति।

[ महाभारतम् १२/३३२/८०]

[७] महाभारतम् १२/३३२/८१-८६

अकारौकारमकारैः संयुक्तः दुर्ग्राह्यः तत्त्वसंयुक्तदेवविशेषः अयं पञ्चविंशकपुरुषैः सम्प्राप्त इति कथ्यते।एकान्तधर्मस्य पुरुषस्य विवेचनायां आचार्यनीलकण्ठेन भिन्नमतं समुपस्थापितम्। यथा– “अथवा ब्रह्मैव चतुर्विंशतितत्त्वरूपोपाधियुतं तदेव त्रिभिरक्षरैरकारोकारमकारैः संयुक्तं सम्यक् समाहितम् उपाधित्यागेन” इति।[८] नीलकण्ठेन जीवब्रह्मणोरेकत्वम् अनेन समुपस्थाप्यते इति जिज्ञासा मनसि समुदिता। दुश्चरधर्मेणानेन सर्वे खलु विमोहिता भवन्ति।

**एकान्तधर्मस्याचार्यपरम्परा**

भगवान् व्यास एव शिष्यं वैशम्पायनं धर्मम् इमम् उपादिशत्। कृष्णभीष्मयोः ऋषीणां च सन्निधौ धर्मोऽयं युधिष्ठिरेण प्राप्तः। पुनः वैशम्पायनेन जनमेजयेन च एकान्तधर्मोऽयं प्राप्तः। यदि हरिगीतायां नारायणीयैकान्तधर्मस्य प्रपञ्चनं भवेत् तर्हि दृश्यते कृष्णोऽर्जुनम् एनम् उवाच। नारायणस्य ब्रह्मणो मानसजन्मनः अनन्तरं फेनप इति ऋषयो धर्मम् एनं लब्धवन्तः। तेभ्यो वनवासिनः ऋषय प्राप्तवन्तः धर्मम् इमम्। ब्रह्मा चाक्षुषजन्मनि चन्द्रात् श्रुतवान्, पुनर्वाचिकजन्मनि तस्य नारायणात् धर्मोऽयं सम्भूतः। सुपर्ण इति ऋषिः पुरुषोत्तमात् प्राप्तं धर्मम् इमं तपसा दमेन नियमेन च पालनात् व्रतम् इदं त्रिसौपर्णम् इत्युच्यते। ब्रह्मणः श्रवणजजन्मनि तदा धर्मस्यास्योद्गमो भवति। ब्रह्मणो विविधे जन्मनि नारायणेन धर्म एषः कथितः। तदन्तरं ब्रह्मणः सनत्कुमारः, सनत्कुमारात् वीरण इति प्रजापतिः, वीरणात् रैभ्यो धर्म एषः प्राप्तः। एकान्तधर्मः त्रिसौपर्णव्रतं ज्येष्ठसामव्रतम् इति नाम्नापि च ख्यातोऽभवत्। उत्तमधर्मोऽयं सुपर्णेन धार्यते। ज्येष्ठ इति नाम्ना ख्यातः सामवेदान्तगद्विजः धर्मम् इमं प्राप्तः। अतो धर्मोऽयं ज्येष्ठसामव्रतधर्मतया आख्यातः। त्रेतायुगस्यादौ विवस्वान् वैवस्वतमनवे ददौ। स खलु इक्ष्वाकुं इमं धर्मं कथितवान्। इत्थं धर्मस्यास्य परम्परा प्रचलति स्म।[९] एकान्तधर्मस्याचार्यपरम्परां परिलक्ष्य स्वामीविद्यारण्यमहाभागो भागवतधर्मेण सह एकान्तधर्मस्य पृथग्भावं स्वीकरोति। तन्मते जनमेजयो भागवतधर्मस्य अथवा सात्त्वतधर्मस्य उत्पत्तिक्रमस्य ज्ञानाद् अनन्तरम् एकान्तधर्मस्य उत्पत्तिविषये वैशम्पायनं

---

[८] महाभारते १२/३३२/८० इति श्लोकस्य नीलकण्ठविरचिता भारतभावदीपटीका द्रष्टव्या।

[९] महाभारतम् १२/३३२/१९-५२

जिज्ञासते। तस्माद् अवगम्यते भागवतैकान्तधर्मयोर्मध्ये पार्थक्यम् अस्ति।[१०] किन्तु नारायणीयम् आख्यानस्य याथार्थ्येन विवेचनाद् अनन्तरम् एतज् ज्ञायते यत्– श्रीमद्भगवद्गीतायां निरूपितस्य एकान्तधर्मस्य साम्यं नारायणीये मोक्षधर्मे पूर्णतया विद्यते इति।

कालचक्रस्यावर्तनात् धर्मस्यास्य विविधा अभिधाः सञ्जाताः। तेषां मध्ये दार्शनिकभावसमूहानां परिपुष्टिः भवति। धर्मोऽयं कदापि नारायणीयधर्मरूपेण विविच्यते। भारतसंहितायां शान्तिपर्वणि नारायणीये मोक्षधर्मे नारायणीयधर्मः परामृश्यते। युधिष्ठिरस्य परदेवतासम्बद्धस्य गूढप्रश्नस्योत्तररूपेण पितामहभीष्मस्तं नारद-नारायणयोराख्यानं वक्तुं प्रपेदे। यद्यस्य नारायणीयधर्मस्य सूक्ष्मविचारः क्रियते तर्हि अयम् एव धर्मो भागवत-पाञ्चरात्र-सात्त्वत-एकान्तादिभिर्नामनिरुक्तिभिः शास्त्रसमुदायेषु प्रपञ्चितो भवतीति निश्चितम्। अस्मिन् एव धर्मे सांख्य-योग-वेदान्तादिदर्शनप्रस्थानानां मूलगतत्वं सर्वथा उपलभ्यते। सांख्ययोगादिषु भारतीयषड्दर्शनप्रस्थानेषु नित्यशुद्धबुद्धमुक्तपुरुषस्य या धारणा विकाशिता भवति, भागवते अथवा एकान्तधर्मे तस्य अन्तर्भावो दृश्यते। स एव निर्गुण-शाश्वत-अव्यय-अक्षय-सर्वग-सनातनपुरुषो नारायणीयमोक्षधर्मे सविशेषं विचार्यते।

**आगमेषु व्याख्यात एकान्तधर्मः**

आगमसाहित्येष्वपि एकान्तमार्गः भगवत्प्राप्तेरनन्यमार्गतया विविच्यते। जयाख्यसंहितायां भागवततान्त्रिकाणां मध्ये एकान्तिनाम् उल्लेखोऽस्ति। भागवतधर्मस्य आगमप्रस्थाने पाञ्चरात्रसंहितानां प्राप्तिर्भवति। निगमेन प्रकाशितस्य सत्यस्वरूपस्य दिग्दर्शिका एवागमसिद्धान्ताः। अतः पाञ्चरात्रसंहितास्वपि एकान्तधर्मस्य तथा एकान्तसाधनमार्गस्य प्रशंसा अस्माकं दृष्टिपथम् आयाति। पौस्करसंहितायां [ ४२/१२, १२५/१८८] एकायनविद्याया उल्लेखबाहुल्यं नयनयोरापतति। परमसंहितायां [/२४] निष्परिग्रह-निर्द्वन्द्व-मुदायुक्तानां परिपक्ककषायधारिणाम् एकान्तिनां परिचयो लक्ष्यते। विष्णुभक्तिसम्पूरितस्य एकान्तधर्मस्य लक्षणम् आगमसंहितादिषु विवृतम् एव। तत्र परमसंहितायां विष्णुभक्तिपरायणा वासुदेवोपासका एकान्तिनः एकान्तधर्मस्य धारकाः इति निगद्यते। तत्राह–

एकान्तिनो मुदायुक्ता विष्णुभक्तिपरायणाः।
श्रद्धया परयोपेता वासुदेवम् उपासते॥ इति।

[परमसंहिता, ३१/३००]

---

१० स्वामी विद्यारण्य, *भागवतधर्मेर प्राचीन इतिहास*, पृ.४५

नारायणात्मकपरस्य एकान्तधर्मस्यानुयायिनां लक्षणप्रसङ्गे आगमसंहितायां वर्ण्यते यथा–

भ्रान्ता भिक्षां च षट्कर्मनिरतेभ्यस्तु सत्कृताम्।
अपरिग्रहवान् यो वै तया सम्पूजयेत् प्रभुम्।
पुमान् गोप्तारम् अव्यक्तम् अष्टाङ्गविधिना महत्।
गुणिना सह शिष्येण वसेत्येको विचारधीः।
कालक्रमेणाधिकारी स एकान्तीह वैष्णवः॥ इति।

[ जयाख्यसंहिता २२/११-१२]

एतेभ्यः प्रमाणेभ्यः उपगम्यते यत्- एतेषाम् आगमशास्त्राणां सङ्कलनसमये भागवत-एकान्तिनां विशेषः स्पष्ट आसीत्। न केवलम् एकान्तभावेन उपासनं पर्याप्तम् आसीत् विशेषलाञ्छनैः तेषाम् अनन्यत्वं शास्त्रेषु प्रतिपाद्यते।

**उपसंहारः**

एकान्तधर्मस्य प्रवक्ता खलु नारायण इति शास्त्रनिचयात् ज्ञायते। अपि तु वासुदेवस्य माहात्म्यम् अपि इतिहासागमसंहितादिषु पूर्णतया उदीरितम्। वासुदेवेन प्रवर्तितस्य अस्य धर्मस्य विस्तारं सांख्ययोगवेदारण्यकज्ञानसमूहानां पाञ्चरात्रमतानाम् एकान्तधर्मे संश्लेषणाद् उपपद्यते। ब्राह्मण्यसंस्कृतौ भागवतधर्मस्य अथवा एकान्तधर्मस्य अन्तर्भाव एतेषां दर्शनप्रस्थानानां मूलभूततत्त्वानां ग्रहणेन समभिव्यज्यते। तत्त्वगतभावनायां बाहीकाचारे च यो विशेषः परिलक्षितः, उक्तेषु शास्त्रग्रन्थेषु तेषां निदर्शनं समुपलभ्यते। सम्भवतया नारायणीय-भागवत-सात्त्वत-पाञ्चरात्र-एकान्तादिभिरभिधाभिः ज्ञापितस्य सनातनभारतीयधर्मस्य विशेषतः सांख्य-योग-वेदान्तदर्शनप्रभावितस्य श्रीकृष्णवासुदेवेन प्रपञ्चितस्य विष्णु-नारायण-कृष्ण-देवानां मूलस्वरूपम् आश्रित्य च प्रचलितः समन्वयात्मकः कश्चिद् धर्मः। महाभारतस्य नारायणीयमोक्षधर्म इत्यध्यायस्य पूर्णाङ्गविश्लेषणाद् बोधोऽयं जायते। अत्र नारद-नारायणयोरुपाख्यानं श्वेतद्वीपवासिनां जनानां वर्णनम् उपरिचरवसोराख्यानञ्च न केवलं कानिचन पौराणिकवृत्तान्तान्, एतान् आधारीकृत्य नारायणतत्त्वस्य वासुदेवतत्त्वस्य च भावना व्यासचेतनायाम् उद्भासितो भवति। एकान्तधर्मे यस्य विवेचनं विशेषेण विहितम् इति दृश्यते।

✶ ✶ ✶

## Bibliography


1. *Amarakoṣa*; Amarasiṃha; Gurunātha Vidyānidhi; (ed.); Sanskrit Pustak Bhandar; Kolkata; 1408 Bangabda
2. *Bhāgavata Dharmera Pracīna Itihāsa*; Svāmī Vidyāraṇya; Prācyavāṇī; Kolkata; 1963
3. *Critical Edition of the Mahabharata*; Vedavyāsa; V S Sukthankar et.al. (ed.); Bhandarkar Oriental Research Institute; Pune; 1919-1966; vols 1-19
4. *Mahābhārata* (with Bhāratabhāvadīpa, Bhāratakaumudī and Bangla translation); Vedavyāsa; Nīlakaṇṭha (comm.); Haridāsa Siddhantavagīśa Bhaṭṭācārya (comm., tr, & ed.); Viśvavāṇī Prakaśanī; Kolkata; 1400 (bangabda); 2nd ed. (1st ed.1345 bangabda); vols 1-42 (referred vol 37)
5. *Pauṣkara Saṃhitā*; Yatirāja Rāmānuja; (ed.); Chowkhamba Sanskrit Series; Varanasi; 1934
6. *Sāhitya Prasaṅga*; Anirvāṇa; Bāṅglāra Mukha Prakāśana; Kolkata; 2013
7. *Śrīmadbhagvadgītā*; Nalinīkānta Brahma; (ed.); Navabhārata Publishers; Kolkata; 2006




# वाक्यार्थविश्लेषणे अभिहितान्वय-अन्विताभिधानवादचर्चा*

अनुसृतामण्डलः †

**Abstract**

[Anvitābhidhāna and Abhihitānvaya are two mostly discussed ancient theories on verbal cognition. This article discusses these two theories briefly alongwith the method they follow to extract Śābdabodha from a given sentence. The author has represented the methods of extracting Śābdabodha with diagrms]

## १. शब्दार्थसम्बन्धः शक्तिश्च

संस्कृतशास्त्रादौ शब्दार्थसम्बन्धो बहुधा प्रपञ्चितः। शब्दाद् अर्थसंप्रत्ययस्तथा चार्थसंप्रत्ययाच्च लोकव्यवहारः प्रवर्तते। शब्दो हि भावाभिव्यक्तेरुत्कृष्टतमं साधनम् अस्माकम्। लोकेऽस्मिन् यावन्तोऽर्थास्तावन्तः शब्दाः। तस्मादेव तत्रभवता वैयाकरणेन भर्तृहरिणोक्तम्–

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते।
अनुविद्धम् इव ज्ञानं सर्वं शब्देन भासते॥

वाक्यपदीयम् (१.११४)

शब्दस्य स्वरूपं किम् इति विषये दार्शनिका विवदमाना दृश्यन्ते। केचिच्छब्दं द्रव्यम् इति कथयन्ति, केचिच्च गुणं, गुणत्वेऽपि केचन नित्यम् अपरेऽनित्यम् आहुः। आकाशगुणो हि शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इति प्राभाकरं दर्शनम्। श्रवणेन्द्रियजन्यं लौकिकप्रत्यक्षं शब्द इति वैशेषिका आमनन्ति।

शब्दश्रवणेन अर्थबोधो भवति इति सर्वजनविदितम्। शब्दार्थयोः मध्ये विद्यमानो नित्यं सम्बन्धः महर्षिणा जैमिनिना अङ्गीकृतः– 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः।'[१] सूत्रस्यास्य व्याख्यायां भाष्यकाराः शब्दार्थयोः

---

* This article was originally accepted under the title शास्त्रेषु अभिहितान्वय-अन्विताभिधानवादविमर्शः. Later the title was changed on special request of the author.

† सहायकाध्यापिका, संस्कृतविभागे, सुरेन्द्रनाथमहाविद्यालयस्य, anusrita1906@gmail.com

१ मीमांसासूत्रम् (१/१/५)

नित्यसम्बन्धम् अङ्गीचक्रुः। अत्र औत्पत्तिकशब्दस्य नित्यः इत्यर्थः। तथाहि शबरस्वामिना तद्भाष्ये भाषितम्– 'औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धो नोत्पन्नयोः पश्चात् सम्बन्धः' [२]। महाकविना कालिदासेन 'रघुवंशम्' इति महाकाव्यस्य प्रथमे श्लोके 'वागर्थाविव सम्पृक्तौ' इत्यनेन शब्दार्थयोः नित्यसम्बन्धोऽङ्गीकृतः।

नैयायिकाः वैशेषिकाश्च शब्दार्थयोः स्वाभाविकं सम्बन्धं न स्वीकुर्वन्ति। परन्तु तैरपि तयोः सामयिकसम्बन्धः स्वीक्रियते। पतञ्जलि-भर्तृहर्यादिवैयाकरणाः शब्दार्थयोः मध्ये तादात्म्यसम्बन्धम् अङ्गीचक्रुः। अपि च, पातञ्जलभाष्ये भणितम्– 'संकेतस्तु पद-पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्द इति।' [३]

शब्दार्थयोः सम्बन्धो नित्योऽनित्यः तादात्म्यरूपो वेति नास्ति सर्ववादिसम्मतं मतम्। शब्दश्रवणेन यः अर्थबोधो भवति, तं प्रति शब्द एव कारणम्। कारणे सति कार्यम् अवश्यम् एव स्यात्। अत्र शब्दस्य अर्थबोधाय अनुकूलः कश्चन व्यापारः अस्ति। शब्दस्य व्यापारोऽयम् आचार्यैः वृत्तिरित्यभिधीयते। आचार्याः मन्यन्ते यत् यदा एकस्यार्थस्य साहाय्येन अपरार्थस्य प्रतीतिः भवति, तदा वृत्तिरियं भवति अर्थगता।

केचनाहुः वृत्तिरियं चतुर्विधा। तद्यथा– अभिधा, लक्षणा, व्यञ्जना, तात्पर्यञ्चेति। [४] केचनापि कथयन्ति– केवलया अभिधया सर्वे अर्थाः निर्णीयन्ते। अतः लक्षणादिवृत्तिस्वीकारेण नास्ति प्रयोजनम्। शब्दस्य श्रवणाद् अर्थबोधोऽर्थसम्प्रत्ययाल्लोकव्यवहारः प्रवर्तते इति सर्वजनवादिसम्मतो राद्धान्तः। तस्माद् एव शब्दार्थयोर्मध्ये विद्यमानो नित्यः सम्बन्धो महर्षिणा जैमिनिनाङ्गीकृतः।

शब्दार्थौ उभावेव त्रिधा विभक्तौ। शब्दाः वाचक-लाक्षणिक-व्यञ्जकाः। अर्थाश्च वाच्य-लक्ष्य-व्यङ्ग्याः। शब्दाद् अर्थग्रहणाय अभिधा-लक्षणा-व्यञ्जनाख्यं शक्तित्रयम् अपेक्षितं वरीवर्ति। शब्दार्थानां वृत्तिभ्यः अभिधा-लक्षणा-व्यञ्जनाभ्योऽतिरिक्ता वाक्यार्थस्य वृत्तिरस्ति– सा च तात्पर्यवृत्तिरेवेति केचित्। तदुक्तं मम्मटेन– 'तात्पर्यार्थोऽपि केषुचित्' [५] इति।

---

[२] शावरभाष्यम् (१/१/५)

[३] पातञ्जलमहाभाष्यम्

[४] तात्पर्यवृत्तिं मीमांसकाः स्वीकुर्वन्ति इति मम्मटाचार्यः काव्यप्रकाशे उक्तवान्। किन्तु मीमांसकाः तात्पर्यवृत्तिम् अङ्गीकुर्वन्ति वा न वा इति सन्दिग्धम्।

[५] काव्यप्रकाशः (द्वितीयोल्लासः) कारिका - ६

## २.०. तात्पर्यवृत्तिविषयकं वादद्वयम्

न्यायशास्त्रं प्रमाणशास्त्रम्। यास्कस्य निरुक्तेऽपि पदानां निरुक्तिर्निरुक्ता। मीमांसाशास्त्रे प्रथमम् एव वाक्यानां पर्यालोचनं प्रारब्धम्। तस्मात् वाक्यार्थशैल्याः विवेचनात् वाक्यार्थशास्त्रम् इदं कथ्यते।[६] मम्मटाचार्यस्तावद् अर्थस्य कृते मीमांसकानां सिद्धान्तं स्वीकृत्य उक्तवान्– 'तात्पर्यार्थोऽपि केषुचित्'[७]। इमां तात्पर्यवृत्तिम् अवलम्ब्य अभिहितान्वयवादोऽन्विताभिधानवादश्चेति परस्परविरुद्धं वादद्वितयं शास्त्रकारैः स्वीकृतम्। उभयोर्वादयोस्तुलनात्मकं पर्यालोचनं हि आशयो हि मम।

## २.१. अभिहितान्वयवादः

भाट्टसम्प्रदायिनः केचिन्नैयायिकाश्चाभिहितान्वयवादं समर्थयन्ते। 'अभिहितानां स्वस्ववृत्त्या पदैरुपस्थापितानामर्थानामन्वय इति ये वदन्ति तेऽभिहितान्वयवादिनः'[८] इति। तन्नये तत्प्रकारकतद्विशेष्यकशाब्दबोधं प्रति तत्प्रकारकतद्विशेष्यकशक्तिज्ञानं कारणम्। मीमांसका व्यञ्जनां न स्वीकुर्वन्तीति हेतोस्तात्पर्यशक्तिस्तु तृतीया। काव्यप्रकाशे अस्य शब्दशक्तेश्चतुर्थप्रकारः स्वीक्रियते। वाक्यार्थ एव तात्पर्यार्थः कथ्यते। एष पृथक् पदानाम् अर्थः, न तु समन्वयरूपवाक्यार्थः। 'अभिधाया एकैकपदार्थबोधनविरामाद् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्यं नाम शक्तिः तदर्थश्च तात्पर्यार्थः। तद्बोधकञ्च वाक्यम् इत्यभिहितान्वयवादिनां मतम्।' अभिहितानां पदार्थानाम् अर्थाभिधायिनां वा पदानाम् अन्वय इति यो वादः सः अभिहितान्वयवादः।

### २.१.१. अर्थावबोधप्रक्रिया

अभिहितान्वयवादानुसारतो वाक्यस्थैः पदैः केवलं पृथक् पदगतानाम् अर्थानाम् अवबोधो भवति। पदानां पारस्परिकसम्बन्धास्त्ववबुध्यन्ते पदानाम् अर्थैरेव। पदेषु स्वस्य अर्थबोधनाय स्वाभाविकशक्तिर्भवति। तया शक्त्या न केवलं पदार्थस्यापि तु इतरान्वितपदार्थानां ज्ञानं भवति। तदनन्तरं परस्परान्वयरूपवाक्यार्थस्य कृते पुनः लक्षणा आवश्यकी। कुमारिलः तन्त्रवार्तिके कथयति– 'पदार्थैः पदविज्ञातैर्वाक्यार्थः प्रतिपाद्यते'[९]। तत्रैव

---

६ *The science of sentences, studies in Mīmāmsā*, p. 207

७ *supra*

८ काव्यप्रकाशः (द्वितीय उल्लासः)

९ पूर्वमीमांसासूत्रस्य द्वितीयाध्याये प्रथमपादे चतुर्दशाधिकरणे ४६तमस्य सूत्रस्य व्याख्यायाम्

आकाङ्क्षादीनां स्वरूपं विवृणोति–

आकाङ्क्षा सन्निधानं च योग्यता चेति च त्रयम्।
सम्बन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः।[१०]

काव्यप्रकाशे मम्मटाचार्यः प्रोक्तवान्– 'आकाङ्क्षा-योग्यता-सन्निधिवशात् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम्।'[११] तत्र येन पदेन विना यस्य पदस्यान्वयानुभावकत्वं तेन पदेन सह तस्याकाङ्क्षा। वस्तुतः श्रोतॄणां जिज्ञासा हि आकाङ्क्षा। 'आनय' इति पदं श्रुत्वा 'किम् आनय' इति कर्मजिज्ञासा हि आकाङ्क्षा।

पदार्थानां मिथः सम्बन्धे बाधाभावो हि योग्यता। 'वह्निना सिञ्चति' इत्यत्र सेचनस्याभावो ज्ञायते। पदानाम् अविलम्बेनोच्चारणं तावत् सन्निधिः। बहोः कालात् परं पदानाम् उच्चारणं भवति चेद् अर्थो नायाति। कुमारिलः स्वस्य श्लोकवार्त्तिके कथयति– 'पदम् अभ्यधिकाभावात् स्मारकान् न विशिष्यते'[१२]। मानमेयोदयेऽपि नीतितत्त्वाविर्भावे उक्तम्– 'शब्दोऽपि संस्कारोद्बोधनद्वारेणैव पदार्थं बोधयतीति स्मरणम् एव पदार्थज्ञानम् इति चिदानन्दप्रभृतयः।'[१३] अर्थात् आकाङ्क्षा-योग्यता-सन्निधिवशाद् एव वाक्यस्य वाक्यार्थो ज्ञायते। तत्र वाक्यार्थमातृकायां[१४] शालिकनाथेन प्रभाकरमिश्राणां मतम् उद्धृतं–

"तद् आहुर्वार्तिककारमिश्राः–
तेऽपि नैवाऽस्मृता यस्माद् वाक्यार्थं गमयन्ति नः।
तस्मात् तत् स्मरणेषु एव संहतेषु प्रमाणता॥"

वस्तुतः, अभिधया एकैकं पदार्थं बोधयित्वा विरमणात् लक्षणायाश्च लक्ष्यार्थं बोधयित्वा विश्रामात् शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति न्यायात् पुनः उत्थानासम्भवात् आकाङ्क्षा-योग्यता-सन्निधिवशात् पदार्थानां मिथः सम्बन्धे बुभुत्सिते अपदार्थे अपि वाच्याद् अर्थविलक्षणशरीरः वाक्यार्थरूपः

१० पूर्वमीमांसासूत्रस्य द्वितीयाध्याये प्रथमपादे षोडशाधिकरणे ४८तमस्य सूत्रस्य व्याख्यायाम्
११ काव्यप्रकाशः (द्वितीय उल्लासः)
१२ 'World is nothing more than a reminder of the meaning', *Indian theories of meaning*, p.202
१३ मानमेयोदये शब्दपरीक्षाप्रकरणे
१४ सुब्रह्मण्यशास्त्रिणा सम्पादिते प्रकरणपञ्चिकाग्रन्थे ४०२ पृष्ठे

तात्पर्यार्थः अनुभवविषयो भवतीति भाट्टानाम् अभिहितान्वयवादिनां मतम्।

अभिधावृत्तिः पृथक् पदानां पृथग् अर्थं बोधयति, परन्तु वाक्यार्थो न केवलं पृथक् पदानां, स्वतन्त्राणाम् अर्थानाञ्चापि अर्थः। अपि तु स वाक्यार्थः पदार्थयोः परस्परसम्बन्धरूपार्थ एव। अतः अस्य वाक्यार्थरूपेण पदसंसर्गाय वा परस्परपदार्थसम्बन्धावबोधनस्य कृते तात्पर्यवृत्तिः स्वीक्रियते। अर्थात् पृथक् पदार्थो न वाक्यार्थः, पदार्थसम्बन्ध एव वाक्यार्थस्तात्पर्यवृत्या सह युज्यते। साहित्यदर्पणे काव्यप्रकाशस्य टीकाकाराश्च प्रदीपकारश्च उभयोः मतम् उल्लिखितवन्तौ।

**वाक्यार्थोत्पत्तेः पद्धतिः (अभिहितान्वयवादः)**

वाक्ये अर्थद्वयं वर्तते– पदार्थः वाक्यार्थश्चेति।

**क. अभिहितान्वयवादः–**




## २.२. अन्विताभिधानवादः

प्राभाकरसम्प्रदायिनोऽन्विताभिधानवादं स्वीकुर्वन्ति। 'पदानि अन्वितानि भूत्वा पश्चाद् विशिष्टम् अर्थं कथयन्तीति ये वदन्ति तेऽन्विताभिधानवादिनः' इति। अन्वयव्यतिरेकाभ्यां नानाविधानि कर्माणि अवेक्ष्य पदार्थः अवगम्यते। अन्वयात् परम् अर्थावगतिरभिधानं वा भवति इति वादोऽन्विताभिधानवादः। पदानां पृथगर्थावगतिर्न सम्भवति। सर्वो वाग्व्यवहारो वाक्येन वाक्यार्थेन च भवति।

मम्मटाचार्यनये वाच्य एव वाक्यार्थः। पदार्थः तु वाक्यार्थः। वाक्यार्थे पदार्थातिरिक्तं किम् अपि नास्ति। अभिधाशक्त्या सर्वप्रथमं पदार्थस्य उपस्थितिर्न भवति, अपि तु सर्वप्रथमम् अन्वितपदार्थानाम् अभिधया बोधो भवति। प्राग् एव सिद्धत्वात् तात्पर्याख्यशक्तेः प्रयोजनं नास्ति एव। अत्र अन्वितानां पदार्थानाम् उपस्थितिः संकेतेनैव भवति।

जयन्तभट्टो न्यायमञ्जर्य्याम् अवदत्– संसृष्टार्थ एव वाक्यार्थः। वाक्यार्थो वाक्यान्न पृथक्। स वाक्ये एव तिष्ठति। प्रत्येकं पदं न केवलं सामान्यम् अर्थं द्योतयति, अपि तु अन्येन पदार्थेन सह समन्वितं भवति इति तस्माद् अर्थबोधो जायते। अर्थात् वाच्य एव वाक्यार्थः।

## २.२.१. अर्थावबोधप्रक्रिया

अन्विताभिधानवादस्य अयम् एव अभिप्रायो यत् 'देवदत्त! गाम् आनय' इत्यादिवृद्धप्रयुक्ते तादृशव्यक्तिसञ्चारे मध्यमवृद्धप्रवृत्तिं दृष्ट्वा बालोऽपि तस्य वाक्यस्य तदर्थबोधकताम् अनुमाय गां नय अथवा अश्वम् आनय इति वाक्यप्रयोगात् गवापसरणे अश्वानयने वा प्रवृत्तिं प्रेक्ष्य अन्वयव्यतिरेकाभ्यां कारकपदस्य क्रियापदार्थान्विते कारके, क्रियापदस्य कारकपदार्थान्वितक्रियाञ्च शक्तिम् अवधारयति। ततश्च प्रयोगावसरे तस्य वाक्यस्य प्रथमतः एव अन्वयबुद्धिर्जायते। तेनाभिधयैव अन्वयबोधापत्तौ किं तात्पर्यरूपवृत्त्यन्तरेण इति प्रभाकरमतानुयायिनां मतम्। इदम् एव गुरुमतम् उच्यते। उत्तमवृद्धस्य वाक्यप्रयोगाद् सास्नादिमन्तम् अर्थं बुद्धा मध्यमवृद्धः गां नयति। तच्चेष्टाम् अनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्या वाच्यवाचकभावलक्षणं सम्बन्धम् अवधार्य बालस्तदनुसरति। ततः परं 'चैत्र गाम् आनय', 'देवदत्त अश्वम् आनय', 'देवदत्त गां नय अश्वम् आनय' इत्यादिवाक्यप्रयोगात् तस्य शब्दस्य अर्थम् अवधारयति सोऽन्वयव्यतिरेकाभ्याम्। अस्माद् अन्वयात् उत्तरम् अर्थावगतिरभिधानं वा भवति इति वादः अन्विताभिधानवादः। पदानां पृथक्तया अर्थावगतिर्नैव सम्भवति। सर्वो वाग्व्यवहारो वाक्येन वाक्यार्थेन च भवति।

प्राभाकरमतानुसारतस्तु विधिमूलकं वाक्यं मनसि प्रत्यक्षप्रतिक्रियाम् उत्पादयति। अर्थात् स्वतः पदस्यार्थः अवगम्यते। मीमांसादर्शनस्य उद्देश्यं विधिपरकतया वेदव्याख्यानम् एव। जैमिनेः पूर्वमीमांसासूत्राद् एव एतत् भासते[१५]। उल्लेख्यं यल्लोकव्यवहाराद् वाक्यार्थज्ञानं सर्वदा जायते। न केवलं तु विधिपरकाद् वाक्याज् ज्ञानं भवति, अपि च परोक्षतया विधिरपि दीयते। यदा बालः शृणोति देवदत्तः गामानयति इति तदा देवदत्त इति कस्यचित् नाम इति ज्ञायते। अश्वं गां च दृष्ट्वा आनयनरूपप्रक्रियां जानाति सः। अत्र विधिः नास्ति तथापि अर्थावबोधः सम्भवति।

जयन्तभट्टो न्यायमञ्जर्याम् अवदत्- संसृष्टार्थ एव वाक्यार्थः। वाक्यार्थः वाक्यान्न पृथक्। स वाक्ये एव तिष्ठति। प्रत्येकं पदं न केवलं सामान्यम् अर्थम् द्योतयति अपि तु अन्येन पदार्थेन सह समन्वितं भवतीति कृत्वा अर्थबोधो जायते। अर्थात् वाच्य एव वाक्यार्थः[१६]।

---

[१५] तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् (१/१/२)

[१६] "This tatparyashakti is the same as the samsargamaryada accepted by

**३.उभयोः सिद्धान्तयोः समीक्षा** विधिवाक्यात् कार्यान्वितत्वेन बोधेऽपि कार्यांशत्यागवत् अन्वयांशत्यागस्य अपि आकाङ्क्षादिलभ्यत्वेन 'अनन्यलभ्यो हि शब्दार्थः इति न्यायेनौचित्यम्। किञ्च अन्वयविशेषस्य विशेषरूपेण भानाय आकाङ्क्षादीनाम् अवश्यम् एव कारणम् वाच्यम्। तन्मते विशेषरूपेण संसर्गः शक्य एव। संसर्गस्यापि प्राक्पदेनोपस्थितावगृहीतग्राहित्वरूपम् प्रामाण्यं शब्दस्य अन्वयव्यतिरेकाभ्यां तस्यान्यलभ्यत्वाच्च। तत्र न च लक्षणा लक्षणाप्रयोजकशक्यार्थान्वयबाधादीनाम् असत्त्वात्। यथा बलवता प्रेरित इषुर्यथा एकेनैव वेगाख्येन व्यापारेण वर्मच्छेदम् उरोभेदं प्राणापहरणं च रिपोर्विधत्ते तथा एक एव शब्दोऽभिधाख्यव्यापारेण पदार्थस्य उपस्थितिं वाक्यार्थबोधञ्च जनयेत्। 'यत्परः शब्दः स शब्दार्थ' इति न्यायात् इत्यपि वक्तुं न शक्यते। 'यत्परः शब्दः' इत्यस्य हि उपात्तशब्दशक्यार्थेषु यदंशे विधेयत्वम् तदेव वाक्यस्य तात्पर्यम् इति अर्थः। यत्र तात्पर्यं स एव शब्दार्थः। यस्तात्पर्येण शब्दः स शब्दार्थः चेत् न एवं तात्पर्यस्य नियतत्वेन शक्तेरप्यनियतत्वापत्तेः। मीमांसकमते विधेयत्वं प्रवर्थनारूपविधिविषयत्वम्।

'दध्ना जुहोति' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ लोहितोष्णीषत्वस्य दधिकरणत्वस्य च विधेयत्वं न स्याद् इति चेद् न भूतं भव्यायोपदिश्यते इति न्यायेन सिद्धसाध्ययोः समभिव्याहारे कारकपदार्थाः क्रियापदार्थेन अन्विताः सन्तः सिद्धा अपि न साध्य इव भवति। 'अदग्धदहन'न्यायेन पूर्ववाक्यात् प्रचरणस्य हवनस्य च प्राप्तत्वात् लोहितोष्णीत्वं दध्नः करणत्वं चा विधेयम् इति[१७]।

### ३.१. खण्डपक्षोऽखण्डपक्षश्च

मीमांसाशास्त्रे वाचो मूलं पदम् एव परिगण्यते। अतो मीमांसाशास्त्रं खण्डपक्षानुगतम् एव। अखण्डपक्षस्य समर्थको वाक्यपदीयकारो भर्तृहरिः। शब्देन कथम् अर्थप्रतीतिर्भवति इति भाषाविज्ञानस्य महती समस्या। प्रतीति-प्रत्यायक-प्रतीतानां मध्ये सम्बन्धः कथं स्थाप्यते इति विचारोऽनवसितः प्राचीनकालाद् अधुना अपि प्रचलति। अस्मिन् विषये सर्वे स्वकमतं विचारयन्ति।

अर्थबोधविषये भारतवर्षीयाणाम् आचार्याणां मतं मुख्यतया द्विविधम् खण्डपक्षाखण्डपक्षभेदात्। खण्डपक्षेऽपि वाक्यार्थबोधविषयकं मतद्वैविध्यम्

---

the later navyanyaya school studies in Mimamsa" (*Indian Theories Of Meaning*, p. 213))

[१७] *वैयाकरणानामन्येषां च मतेन शब्दस्वरूपतच्छक्तिविचारः* पृ. १३३

अस्ति। तथाहि के.कुञ्जन-राजामहोदयेन उक्तम्– Khandapaksa or according to the analytical method a word is considered as an autonomous unit of thought and sense and language studies are made on the basis of words, and the sentences is taken to be a concatenation of words[१८].

किञ्च तेनैव गदितम् अखण्डपक्षसन्दर्भे–

"According to the akhandapaksha the fundamental linguistic fact is the sentence. It takes the sentence and a gestalt whose parts are not relevant to it. Bhartrihari developed it as a perfect theory which can explain all the anomalies in language behaviour. He defines the sentence as a single integral symbol… which is revealed by the individual letters and words that comprise it. By this Vakyasphota sentence consider as indivisible[१९].

**वाक्यार्थोत्पत्तेः पद्धतिः (अन्विताभिधानवादः)**




**४. उपसंहृतिः**

प्राचीनभारतीयमीमांसकानां वाक्यार्थावबोधप्रक्रियायाः सुचिन्तितो विचारो न केवलं प्राचीनभारतीयभाषाविज्ञानस्येतिहासे अपि तु व्याकरण-नव्यन्याय-साहित्यादिशास्त्रेषु चोज्ज्वलोऽध्यायः। तत्र अभिहितान्वयवाद-अन्विताभिधानवादयोर्विचारः समासेन वर्णितः। परं मन्मते अभिहितान्वयाद् अन्विताभिधानवादः ग्रहणीय इति। तथापि तत्त्वदृष्ट्या तु अन्विताभिधानवादस्य ग्राह्यतरत्वं सूच्यते। तस्मात् कुञ्जुन्निराजा-महोदयेन उक्तम्– Among Modern Writers on Linguistics seem to represent the anvitabhidhana theory. In determining

---

१८ *Indian Theories Of Meaning*, p. 6

१९ *ibid*, p.7

the nature of a sentence no action to what is expressed by the word should be assumed… The sentence is the unit of speech is comparable to the anvitabhidhana theory [२०]. साहित्यिका अपि भाट्टमतम् एव अङ्गीकुर्वन्ति। काव्यप्रकाशे इत्यभिहितान्वयवादिनां मतम् इति बहुवचनेन इत्यन्विताभिधानवादिनः इति चैकवचनेन ज्ञायते यत् काव्यप्रकाशकृतां भाट्टमतम् एव अभिमतम्। एतेन सिध्यति यत् साहित्यिकानां नये तात्पर्यवृत्तिप्रतिपाद्यः तात्पर्यार्थोऽपि अस्तीति शिवम्।

✶✶✶

## Bibliography


1. *Mānameyodayaḥ*; Nārāyaṇadvayī; Svāmī Yogīndrānanda (tr.); Ṣaḍdarśana-prakāśana-pratiṣṭhānam; Benaras; 1978
2. *Mīmāṃsā Darśana Kā Vivecanātmaka Itihāsa*; Gajānana Śāstrī Musalagāṁvakara; Chowkhamba Vidyabhavan; Benaras; 1992
3. *Vaiyākaraṇānāmanyeṣāṃ Ca Matena Śabdasvarūpatacchaktivicāraḥ*; Kālikā Prasāda Śukla; Sampurnanand Sanskrit University; Benaras, 1979
4. *Śabdārthasambandhamīmāṃsā*; Gaṅgādhara Kara; Sanskrit Book Depot; Kolkata; 2003
5. *Indian Theories of Meaning*; K. Kunjunni Raja; The Adyar Library and Research Center; Chennai; 1963
6. *Introuction to the Purva-Mīmāmsā*; Paśupatinātha Śāstrī & Gaurīnātha Śāstrī (eds.); Chowkhamba Orientala; Varanasi; 1980
7. *Prakaraṇapañcikā*; Śālikanāthamiśra; A Subrahmaṇya Śāstrī (ed.); Benaras Hindu University; Varanasi; 1961
8. *Studies in Mīmāmsā*; R.C Dwivedi; Motilal Banarsiass Publishers Pvt. Limited; Delhi; 1994


❋❋❋

२० *Indian Theories of Meaning*, p.19

# न्यायनये क्त्वाप्रत्ययार्थविमर्शः

वासुदेवगराइः *

**Abstract**

[The suffix ktvā is used to denote a past action. But how the meaning of the suffix should be combined with other words in a sentence? Their lies the problem. The Gramarians and the Naiyāyikas hold different points of views regarding the meaning and its relation to other words. Even the Naiyāyikas differ with each other regarding the relation of ktvā with other words in the sentence. This article details the views of various Naiyāyikas.]

## ०. उपोद्घातः

प्रदीपः सर्वविद्यानाम् इत्याद्यभियुक्तोक्त्या सकलविद्यानाम् आश्रयभूतेयम् आन्विक्षिकी। ननु कथम् अस्याः सकलविद्याश्रयत्वम् इति चेत् सकलविद्याधिपतेः वेदस्य अनेककुतार्किककपोलकल्पिताक्षेपनिरसनेन प्रामाण्यव्यवस्थापकत्वात् सलकविद्याश्रयत्वम् इति प्रणिधेयम्। तदुक्तं जयन्तभट्टैः न्यायमञ्जर्याम्– "न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यहेतुत्वाद्" इति[१]। सेयम् आन्विक्षिकी न्यायविद्या, प्रमाणविद्या, न्यायशास्त्रम् इत्यादिभिः शब्दैः व्यपदिश्यते। इदं च न्यायशास्त्रं पञ्चाध्यायीभाष्यवार्तिकतात्पर्यटीकादिभिः राजदीपवत् राराज्यते। अत्र च स्वीकृतेषु चतुर्षु प्रमाणेषु शब्दः अन्यतमः। शब्दाज् जायमानः बोधः शाब्दबोधः। तं प्रति च पदजन्यपदार्थज्ञानस्य कारणत्वात् वाक्यघटकपदार्थानां ज्ञानम् आवश्यकम्। क्त्वाप्रत्ययान्तपदघटितवाक्यम् अपि वेदेषु अथ च लोकेषु दृश्यते तत्र शाब्दबोधाय क्त्वाप्रत्ययार्थज्ञानम् आवश्यकम्। अतः "दर्शपूर्णमासाभ्याम् इष्ट्वा सोमेन यजेत" इत्यादिवेदवाक्यार्थावबोधाय 'चैत्रो भुक्त्वा गच्छति' इत्यादिलौकिकवाक्यार्थावबोधाय च क्त्वाप्रत्ययार्थं निरूपयन्ति नैयायिकाः। तत्र प्राथम्येन जगदीशमतं प्रतिपाद्यते।

---

* शोधार्थी, संस्कृतदर्शनविभागे, रामकृष्णमिशन्-विवेकानन्दशैक्षणिकशोधसंस्थानस्य, basudev.document@gmail.com

१ श्रीजयन्तभट्टकृतन्यायमञ्जरी, पुटसंख्या- ६

## १. जगदीशमतम्

आचार्यजगदीशेन क्त्वाप्रत्ययार्थनिरुपणावसरे स्वकीयतर्कामृताख्ये ग्रन्थे उक्तम्- "पूर्वकालीनत्वं कर्ता च क्त्वार्थः" [२] इति। पूर्वकालीनत्वं नाम तत्प्रागभावकालवृत्तित्वम्। तत्पदेन च क्त्वान्तसमभिव्याहृतधातूपस्थाप्यक्रिया ग्राह्या। कर्ता इत्यस्य च कृत्याश्रय इत्यर्थः। स च क्त्वाप्रकृतिभूतधात्वर्थानुकूलकृत्याश्रयः बोध्यः। तथा च क्त्वान्तसमभिव्याहृतधातूपस्थाप्यक्रियाप्रागभावकालवृत्तित्वम् अथ च क्त्वाप्रकृतिभूतधात्वर्थानुकूलकृत्याश्रयत्वं क्त्वार्थत्वम् इति पर्यवसितम्। एतादृशविवक्षायां च धातोः क्त्वाप्रत्ययः भवति। यथा देवदत्तो भुक्त्वा व्रजति इत्यादौ। अत्र हि क्त्वान्तधातुः भुजिधातुः, तत्समभिव्याहृतधातुः व्रजिधातुः, तदुपस्थाप्यक्रिया व्रजनक्रिया, तत्प्रागभावकालवृत्ति भोजनं, तदनुकूलकृत्याश्रयश्च देवदत्तः इति प्रतीयते। कर्तुश्च अत्र क्त्वान्तसमभिव्याहृतधातूपस्थाप्यक्रियाश्रये अभेदेन अन्वयः भवति समानविभक्तिकृतामभेदेन धर्मिवाचकत्वात् [३]। पूर्वकालीनत्वं च क्त्वाप्रत्ययप्रकृतिभूतधात्वर्थे अन्वेति। तेन उपर्युक्तवाक्यात् व्रजनप्रागभावकालवृत्तिभोजनकर्त्रभिन्नः व्रजनानुकूलकृत्याश्रयो देवदत्तः इति शाब्धधीः।

अत्र पूर्वकालीनत्वस्य क्त्वार्थत्वाभावे यत्र स्वकीयभोजनात् प्राक् गमनं तत्र अपि भुक्त्वा गच्छति इति प्रयोगापत्तिः स्यात्। तथा च कर्ता अपि क्त्वार्थः। तस्य च क्त्वान्तसमभिव्याहृतधातूपस्थाप्यक्रियाश्रये अभेदेन अन्वयाद् असमानकर्तृकविवक्षायां सन्निहितक्रियापूर्वकालीनत्वसत्वेऽपि धातोः क्त्वाप्रत्ययः न भवति।

ननु एतावता अपि यत्र पचनान्तरं गमनशयनादिकं ततः भोजनं तत्र पचिक्रियायां सन्निहितक्रियापूर्ववृत्तित्वसत्वेऽपि पक्त्वा भुङ्क्ते इति प्रयोगापत्तिः। अतः तद्वारणाय क्त्वान्तसमभिव्याहृतधातूपस्थाप्यक्रियायां क्त्वाप्रकृतिभूतधातूपस्थाप्यक्रियाव्यवहितोत्तरत्वं निवेश्यं तेन पचनस्य सन्निहितक्रियापूर्ववृत्तित्वेऽपि भोजनस्य क्त्वाप्रकृतिभूतधातूपस्थाप्यक्रिया-व्यवहितोत्तरत्वाभावात् नातिव्याप्तिः। अथवा पूर्वकालीनत्वम् इत्यस्य तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वम् इत्यर्थः स्वीकार्यः। अत्रापि तत्पदेन क्त्वान्तसमभिव्याहृतधातूपस्थाप्यक्रिया ग्राह्या। तथा च

---

[२] तर्कामृतम्, शब्दखण्डः, पुटसंख्या– १०२

[३] तर्कामृतम्, शब्दखण्डः, पत्रसंख्या-१०२

त्त्वान्तसमभिव्याहृतधातूपस्थाप्यक्रियोत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वम् अथ च त्त्वाप्रकृतिभूतधात्वर्थानुकूलकृत्याश्रयत्वं त्त्वार्थत्वम् इति पर्यवसितम्। तथा सति त्त्वान्तसमभिव्याहृतधातूपस्थाप्यक्रियायां त्त्वाप्रकृतिभूतधातूपस्थाप्यक्रियाव्यवहितोत्तरत्वं न निवेश्यं, तत्र पाकस्य भोजनक्रियोत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वाभावात्। वस्तुतस्तु प्रयोजनाभावात् एव तत् न देयम्। यतो हि अत्र "कालः तात्पर्यवशाद् व्यवहिताव्यवहितसाधरणो बोद्धव्य"[४] इत्यस्य ग्रन्थकर्त्रा वक्ष्यमाणत्वात्। तेन च 'पूर्वस्मिन्नब्दे तद् गत्वा पञ्चमेऽब्दे समागतः' इति प्रयोगसिद्धिः।

न च त्त्वाप्रत्ययस्य पूर्वकालीनत्वार्थत्वे मुखव्यादानस्य स्वापोत्तरकालिकतया मुखं व्यादाय स्वपिति इति प्रयोगानापत्तिरिति वाच्यम्, तत्र मुखव्यादानानन्तरम् अपि स्वापसत्त्वात् तादृशस्वापपूर्वकालीनत्वमादाय व्यवहारोपपत्तेः। एवम् एव मुखं संमील्य हसति इत्यादौ अपि बोध्यम्। अतः जगदीशमते तु पूर्वकालीनत्वं कर्ता च त्त्वार्थः।

**२. मणिकारानुयायिमतम्**

तत्त्वचिन्तामणिकारानुयायिमते पूर्वकालीनत्वं न त्त्वाप्रत्ययार्थः किन्तु आनन्तर्यम् अथ च समानकर्तृकत्वं त्त्वाप्रत्ययार्थः[५]। आनन्तर्यमित्यस्य च उत्तरकालवृत्तित्वमित्यर्थः। त्त्वाप्रकृतिधात्वर्थस्य च आनन्तर्ये अन्वयः भवति। आनन्तर्यस्य अथ च समानकर्तृकस्य सन्निहितक्रियायामन्वयः भवति। तेन भूत्त्वा गच्छति इत्यस्य भोजनोत्तरकालवृत्ति समानकर्तृकं यत् गमनं तदनुकूलकृतिमान् इति वाक्यार्थबोधः। समानकर्तृकस्यापि त्त्वार्थत्वात् मैत्रभोजनानन्तरं गते चैत्रे भुत्त्वा व्रजति चैत्रः इति न प्रयोगः।

न चैवम् अपि मैत्रभोजनानन्तरं चेत्रै गते, चैत्रो भुत्त्वा गच्छति इति प्रयोगः दुर्वारः इति वाच्यं, यद्भोजनान्तर्यं यद्गमने प्रतीयते तद्भोजनसमानकर्तृकस्यैव तत्रान्वयः इति नियमात्[६]। अत्रायं भावः- समानकर्तृकस्य त्त्वार्थत्वेपि मैत्रभोजनानन्तरं गते चैत्रे भुत्त्वा व्रजति चैत्रः इति प्रयोगः दुर्वारः एव। ननु तत्र कथं समानकर्तृकस्य लाभः इति चेत् मैत्रभोजनानन्तर्यस्य, गमनोत्तरचैत्रकर्तृकभोजनमादाय समानकर्तृकत्वस्य लाभः सम्भवति इति प्रश्नकर्तुः आशयः। परन्तु एतत् न समीचीनं यत्कर्तृकभोजनानन्तर्यं यत्कर्तृकगमने प्रतीयते तत्कर्तृकभोजनसमानकर्तृकत्वम् एव अपेक्ष्यते इति

[४] तर्कामृतम्, शब्दखण्डः, पत्रसंख्या-१०२

[५] शाब्दबोधमीमांसा, तृतीयभागः, पत्रसंख्या-४२०

[६] शाब्दबोधमीमांसा, तृतीयभागः, पत्रसंख्या-४२१

नियमात्। प्रकृते तु मैत्रकर्तृकभोजनानन्तर्यं चैत्रकर्तृकगमने प्रतीयते न तु चैत्रकर्तृकभोजनानन्तर्यम्।

चैत्रो मुखं व्यादाय स्वपितीत्यादिसङ्गत्यै मणिकारानुयायिनः मुखव्यादानादिजनकत्वे लक्षणा[७] इति वदन्ति। एवं मणिकारानुयायिमते क्त्वाप्रत्ययस्य आनन्तर्यं समानकर्तृकत्वं चार्थः।

## ३. न्यायकौस्तुभकारमतम्

न्यायकौस्तुभकारास्तु क्त्वाप्रत्ययस्य प्रधानक्रियापूर्वकालीनत्वम् अर्थः[८] इति वदन्ति। न च भुक्त्वा एकवर्षोत्तरं गते चैत्रे 'चैत्रो भुक्त्वा गच्छति' इति प्रयोगवारणाय प्रधानक्रियाव्यवहितपूर्वकालीनत्वे क्त्वाप्रत्ययस्य शक्तिः इति वक्तव्या, तथा सति भोजनानन्तरं घटिकादिविलम्बेन गते चैत्रे, 'चैत्रो भुक्त्वा व्रजती'ति प्रयोगापत्तेः भोजनस्य गमनाव्यवहितपूर्वकालवृत्तित्वाभावात्। अतः प्रधानक्रियापूर्वकालीनत्वम् इत्यस्य प्रधानक्रियाप्रागभावाधिकरणघटिकादिरूपपूर्वकालवृत्तित्वे तात्पर्यम् इति वक्तव्यम्। वस्तुतस्तु प्रधानक्रियायाः तु तिङादिप्रकृतितः एव लाभसम्भवे पूर्वकालीनत्वं समानकर्तृकत्वं च क्त्वार्थत्वम् इत्येव सिद्धान्तितम्[९]। एवं पूर्वकालीनत्वं समानकर्तृकत्वं च क्त्वाप्रत्ययार्थः इति पर्यवसितम्। तत्र तिङ्प्रत्ययप्रकृत्यर्थप्रधानक्रियाविशेष्यतया अन्वितस्य पूर्वकालीनत्वस्य क्त्वाप्रकृत्यर्थक्रियायाम् अन्वयः भवति। समानकर्तृकत्वस्य च प्रधानक्रियायां विशेषणतया अन्वयः भवति। तेन चैत्रो भुक्त्वा व्रजतीत्यस्य गमनपूर्वकालीनभोजनसमानकर्तृकं यद् गमनं तदनुकूलकृतिमान् चैत्रः इति अन्वयबोधः भवति।

### ३.१. शङ्का

पूर्वकालीनत्वस्य क्त्वाप्रत्ययार्थत्वे मुखं व्यादाय स्वपिति झणात्कृत्य पतति इत्यादौ मुखव्यादानस्य स्वापजन्यत्वेन स्वापोत्तरकालीनत्वात् झणात्कारस्य कंसपतनजन्यत्वेन पतनोत्तरकालीनत्वाच्च तस्य मुखव्यादानझणात्कारक्रिययोः अन्वयाभावात् पूर्वकालीनत्वं न क्त्वार्थः।

### ३.२. समाधानम्

अत्र 'मुखं व्यादाय स्वपिति' इत्यादौ 'सुप्त्वा मुखं व्यादत्त' इति

[७] शाब्दबोधमीमांसा, तृतीयभागः, पत्रसंख्या-४२१

[८] न्यायकौस्तुभः, शब्दपरिच्छेदः, पुटसंख्या– ८२९

[९] न्यायकौस्तुभः, शब्दपरिच्छेदः, पुटसंख्या-८२९-८३०

व्यत्ययेन अन्वयात् किञ्च 'झणात्कृत्वा पतितः' इत्यादौ अपि 'पतित्वा झणात्करोति' इति व्यत्ययेन अन्वयात् ततः व्यत्ययेन वाक्यानुसन्धानपूर्वकं व्यादानपूर्वकालीनस्वापसमानकर्तृकव्यादानानुकूलकृतिमान् इति झणात्कारपूर्वकालीनपतनसमानकर्तृकझणत्कारानुकूलकृतिमान् इति अन्वयबोधः।

वस्तुतस्तु अव्ययानाम् अनेकार्थतया क्त्वाप्रत्ययस्याव्ययकृत्प्रत्ययत्वेन च नानार्थतया 'मुखं व्यादाय स्वपिति' इत्यादौ 'झणात्कृत्य पतति' इत्यादौ च क्त्वाप्रत्ययेन जनकत्वस्य बोधनात् मुखव्यादानजनकः स्वापः झणात्कारजनकं पतनम् इति अन्वयबोधनात् न दोषः।

**३.३. शङ्का**

ननु समानकर्तृकत्वं क्त्वार्थत्वम् इति तु अनुपपन्नम्। तथाहि–

अवजानासि मां यस्माद् अतस्ते न भविष्यति।
मत्प्रसूतिम् अनाराध्य प्रजेति त्वां शशाप सा॥

[रघुवंशम् १.७७]

इत्यत्र क्त्वार्थस्य समानकर्तृकस्य अन्वयानुपपत्तिः, प्रजाकर्तृकोत्पत्तिरूप-समानकर्तृकत्वस्य दिलीपकर्तृकाराधनक्रियायामन्वयाभावात्। अतः समान-कर्तृकत्वं न क्त्वार्थः किन्तु पूर्वकालीनत्वम् एव इति शङ्कितुराशयः।

**३.४. समाधानम्**

अत्र समाधानं दीयते यत् अत्र 'अनाराध्य' इत्यतः परं 'स्थितस्य' इति क्रियावाचकपदस्य अध्याहारेण स्थितिरूपक्रियाम् आदाय समानकर्तृकत्वस्य लाभात् न कापि हानिः। अतः समानकर्तृकत्वम् अपि क्त्वार्थः इति भावः। एवं न्यायकौस्तुभकारमते पूर्वकालीनत्वम् अथ च समानकर्तृकत्वं क्त्वार्थः इति आगतम्।

**४. सारमञ्जरीकारमतम्**

सारमञ्जरीकारस्य जयकृष्णाचार्यस्य मते तु क्त्वाप्रत्ययस्य आनन्तर्ये एव शक्तिः विद्यते[१०]। एवञ्च तस्य प्रत्ययार्थत्वेन प्राधान्यात् तत्रैव क्त्वाप्रकृतिभूतधात्वर्थस्य विशेषणत्वेन अन्वयो भवति। आनन्तर्यं नाम ध्वंसाधिककरणकालवृत्तित्वम्। तच्च क्त्वान्तसमभिव्याहृतधात्वर्थे अन्वेति। ततश्च भुक्त्वा व्रजति इत्यस्य भोजनध्वंसाधिकरणकालवृत्तिव्रजनानुकूलकृतिमान् इति बोधः। अत्रार्थे च अनुभव एव प्रमाणम्। तदुक्तं सारमञ्जर्यां- "तस्यानन्तर्य

[१०] सारमञ्जर्याम्, तस्य आनन्तर्य एव शक्तिः इति। पुटसंख्या– ७९

एव शक्तिः। भुक्त्वा व्रजति इत्यादौ भोजनानन्तरं व्रजनानुभवस्य सिद्धत्वात्”[११] इति। ननु भुक्त्वा व्रजति इत्यादौ समानकर्तृकत्वस्य व्रजनपूर्वकालीनत्वस्यापि अनुभवसिद्धत्वात् तयोरपि क्त्वार्थत्वम् अस्तु इति चेत् न, तयोः आक्षेपलभ्यत्वात्। तथाहि ‘चेत्रो भुक्त्वा व्रजति’ इत्यादौ भोजनध्वंसाधिकरणकालवृत्तिव्रजनानुकूलकृतिमान् चैत्र इति बोधे जाते व्रजनपूर्वकालं भोजनम् इति अर्थतो लभ्यते। अपि च व्रजति इत्यादौ आख्यातार्थे कर्तरि चैत्रे ज्ञाते उपस्थितत्वात् स एव भोजनकर्ता इत्यस्य बोधः भवति। तेन समानकर्तृकत्वम् अपि लब्धम्। अतः न तयोः क्त्वार्थत्वम् इति भावः।

ननु आनन्तर्यस्य क्त्वार्थत्वे ‘झणात्कृत्य पतति’, ‘मुखं व्यादाय स्वपिति’, ‘मुखं सम्मील्य हसति’ इत्यादौ झणात्कारादीनां पतनाद्यनन्तरसत्त्वात् कथं क्त्वाप्रत्ययः इति चेत् अत्र आदिमं क्षणं झणात्काराद्यधिकरणं परित्यज्य तदनन्तरतत्क्षणीयपतनादिग्रहेणैव आनन्तर्यस्यापि सामञ्जस्यात् न कापि हानिः। अतः सारमञ्जरीकारस्य श्रीमज्जयकृष्णस्य मते क्त्वाप्रत्ययस्य आनन्तर्ये एव शक्तिः।

### ५. विमर्शः

अत्र क्त्वार्थविषये चतुर्णां नैयायिकानां मतानि उल्लिखितानि। तत्र जगदीशतर्कालङ्कारमते पूर्वकालीनत्वं कर्ता च क्त्वार्थः। न्यायकौस्तुभकारमते पूर्वकालीनत्वं समानकर्तृकत्वं च क्त्वार्थः। मणिकारानुयायिमते तु आनन्तर्यम् अथ च समानकर्तृकत्वं क्त्वार्थः। अन्ते च सारमञ्जरीकारस्य मतं प्रतिपादितम्। तन्मते केवलम् आनन्तर्यम् एव क्त्वार्थः। ननु एतेषु सिद्धान्तेषु कस्तावत् ज्यायान् इत्यत्र अस्ति विचारावसरः। तथाहि पूर्वकालीनत्वं कर्ता च न क्त्वार्थः। तत्र कर्तुः इत्यस्य समानकर्तृकत्वे एव तात्पर्यम्। तस्य च न क्त्वार्थत्वम् अनन्यलभ्यो हि शब्दार्थः इति न्यायात् आकाङ्क्षाभास्यत्वेन अन्यलभ्यत्वात्। न च केवलं पूर्वकालीनत्वं क्त्वार्थः भवतु इति वाच्यं, तस्य प्रत्ययार्थत्वात् प्राधान्यात् तत्रैव प्रकृत्यर्थस्य अन्वयोचिततया भुक्त्वा गच्छति इत्यादौ क्त्वार्थस्य सन्निहितक्रियायाम् अन्वयेन भोजनपूर्वकालीनं गमनम् इति अनिष्टशाब्दबोधापत्तेः। किञ्च द्वयोः एकवृन्तगतफलद्वयन्यायेन शक्यार्थत्वे शक्यतावच्छेदककृतगौरवम् अपि स्यात्। अतः नापि कर्ता क्त्वार्थः, नापि पूर्वकालीनत्वम्।

---
[११] सारमञ्जर्यी, पत्रसंख्या-७९

अतः आनन्तर्यम् अर्थात् उत्तरकालवृत्तित्वं त्त्वाप्रत्ययार्थः इति जयकृष्णमतम् एव स्वीकार्यम्। उत्तरकालवृत्तित्वं नाम ध्वंसाधिकरणकालवृत्तित्वं, न तु तदधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वं पाककाले भुञ्जाने पुरुषे पक्त्वा भुङ्क्ते इति प्रयोगापत्तेः, तदधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वस्य भोजनेऽपि सत्त्वात्[१२]। तस्य च सन्निहितधातूपस्थाप्यक्रियायाम् अन्वयः। तेन भुक्त्वा गच्छति इत्यस्य भोजनध्वंसाधिकरणकालवृत्तिगमनानुकूलकृतिमान् इति शाब्दबोधः।

न च भुक्त्वा गच्छति इत्यादौ त्त्वार्थस्य आनन्तर्यत्वे तस्य च सन्निहितधातूपस्थाप्यैकदेशभूतक्रियायामन्वये सति पदार्थः पदार्थेन अन्वेति न तु तदेकदेशेन इति न्यायविरोधापत्तिः स्यादिति वाच्यम्, यद्यत्पदार्थपदार्थतावच्छेदकयोः अन्वयबोधः प्रामाणिकः तत्तद्भेदकूटवत्त्वस्य नियमघटकीभूतपदे निवेशात्[१३] सङ्कोचात् न्यायविरोधाभावात्।

अपि च केवलम् आनन्तर्यस्यैव त्त्वार्थत्वस्वीकारे शक्यतावच्छेदककृतलाघवम् अप्यस्त्यतः शक्यतावच्छेदककृतलाघवात्, पदार्थः पदार्थेन अन्वेति न तु तदेकदेशेन इति न्यायविरोधाभावात्, समानकर्तृकत्वादीनाञ्च आक्षेपलभ्यत्वात्, आनन्तर्यस्यैव अनन्यलभ्यत्वात् तस्यैव त्त्वार्थत्वम् वक्तुम् उचितम् इति शिवम्।

***

[१२] न्यायकौस्तुभः, शब्दपरिच्छेदः, पुटसंख्या– ८३३

[१३] व्युत्पत्तिवादस्य प्रथमभागस्य विद्वन्मनोरमाव्याख्यायाम्, पुटसंख्या– १३

## Bibliography


1. *Tarkāmṛtam* (Vivṛti-sahitam); Jagadīśatarkālaṅkāra; Jīvanakṛṣṇa Tarkatīrtha (comm.); Śiśira Kumāra Mitra (ed.); Asiatic Society; 1974
2. *Nyāyakaustubhaḥ* Mahādeva Puṇya Tāmbekara & Subrahmaṇya Śāstrī (eds.); Tanjavur Maharaja Sarabhoji Saraswati Mahal Library; Tanjavur; 1992
3. *Vyutpattivādaḥ* (Vidvanmanoramā-vyākhyā-sahitaḥ); Gadādharabhaṭṭāracārya; N.S.Rāmānujatātācārya (comm. & ed.); Rashtriya Sanskrit Vidyapeetha; Tirupati; 2006
4. *Sāramañjarī* (Sāradīvyakhyāsahitā); Jayakṛṣṇatarkālaṅkāra; Kālīpada Tarkācārya (comm.); T. Kesavanarayan (ed.); Sanskrit Academy; Hyderabad; 2011




# रघुवंशमहाकाव्ये मल्लिनाथकृतसञ्जीविनीटीकायां कोषग्रन्थानां प्रयोगविमर्शः

बाप्पाराजवंशी*

**Abstract**

[Mallinātha, one of the greatest minds of our land, has written commentaries on many poetic works. Among many salient features of his commentaries, one very interesting feature is his references to many lexicons. This article gives a brief account of Mallinātha's references to various lexicons while commenting on the Raghuvaṃśa mahākāvya.]

## ०. भूमिका

पञ्चसु महाकाव्येषु कालिदासविरचितं रघुवंशम् अन्यतमम्। अस्य महाकाव्यस्योपरि मल्लिनाथेन सञ्जीविनी टीका विरचिता। दक्षिणभारते आन्ध्रप्रदेशस्य तेलेङ्गाना इति मण्डलस्य कोलाचलपुरी इति ग्रामे कोलाचलवंशे मल्लिनाथस्य जन्म जातम् इति पि. श्रीराममूर्तिमहोदयस्य मते[१]। कालिदासादिकवीनाम् इव मल्लिनाथस्यापि प्रसिद्धिरस्ति। मल्लिनाथः अन्वयमुखेन काव्यानां व्याख्यानं कृतवान्। रघुवंशस्य आदौ तेनैव उक्तम्– "इहान्वयमुखेनैव सर्वं व्याख्यायते मया"[२] इति। मल्लिनाथेन रघुवंशमहाकाव्यस्य सञ्जीविनीटीकायां व्याकरणादिविषयैः सह अमरकोशः अभिधानरत्नमाला वैजयन्ती शाश्वतकोशः विश्वप्रकाशश्चेति कोषग्रन्थानाम् उद्धरणं कृतम्। एतेन यथा रघुवंशस्य अर्थे स्पष्टता जाता तथैव तस्य टीकायाः महत्त्वम् अपि अधिकं जातम्। अधुनाधः एतेषां विवरणं प्रस्तूयते।

## १. अमरकोशः

**वामनः** [३]– वामनः खर्व इव। खर्वो ह्रस्वश्च वामनः इत्यमरः।

---

* शोधार्थी, साहित्यविभागे, राष्ट्रियसंस्कृतविश्वविद्यालये, तिरुपतौ, neo.bappa.raj@gmail.com

१ P. Sriramamurti : *Contribution of Andhara to Sanskrit Literature*, 1972, P- 110.

२ रघुवंशमहाकाव्यस्य, सञ्जीविनीटीकायां भूमिकाश्लोकः ९

३ प्रांशुलभ्ये फले लोभाद् उद्बाहुरिव वामनः (रघुवंशम्, १.३)

मल्लिनाथेन वामन इति शब्दस्य अर्थः कृतः खर्वः। अमरकोशे वामनशब्दस्य अर्थस्तावत् खर्वः ह्रस्वश्च। द्विप्रकारेषु अर्थेषु मल्लिनाथः खर्वः इत्यर्थं गृहीतवान् अत्र।

**त्यागाय** [४]– त्यागाय सत्पात्रे विनियोगस्त्यागस्तस्मै। त्यागो विहापितं दानम् इत्यमरः।

मल्लिनाथः अत्र त्यागः इति शब्दस्य सत्पात्रे विनियोगः दानं वा इत्यर्थं गृहीतवान्।अमरकोशस्य श्लोकस्तावत्–

त्यागो विहापितं दानम् उत्सर्ज्जनविसर्ज्जने।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्।
प्रादेशनं निर्वपणमपवर्ज्जनमंहतिः॥ [५] इति।

अमरकोशे पुंलिङ्गविशिष्टस्य त्यागः इति शब्दस्य दानं विहापितम् उत्सर्जनं विसर्जनं विश्राणनं वितरणं स्पर्शनं प्रतिपादनं निर्वपणम् अपवर्जनम् अंहतिः च इत्येतेषां समार्थकशब्दानाम् उल्लेखाः सन्ति। एतेषु समार्थकशब्देषु अंहतिः इति स्त्रीलिङ्गशब्दः अन्ये च क्लीबलिङ्गशब्दाः एतेषु अर्थेषु त्यागः इति शब्दस्य अर्थः दानम् इत्यर्थं गृहीतवान् मल्लिनाथः।

**वेधाः** [६]- वेधाः स्रष्टा। स्रष्टा प्रजापतिर्वेधाः इत्यमरः।

मल्लिनाथः वेधा इति शब्दस्य स्रष्टा इत्यर्थं गृहीतवान्। अमरकोशस्य सम्पूर्णश्लोकस्तावत्–

ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः।
हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः॥
धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः।
स्रष्टा प्रजापतिर्व्वेधा विधाता विश्वसृग्विधिः॥ [७] इति।

अर्थात् अमरकोशे उल्लिखिताः ब्रह्मणः वाचकाः शब्दाः यथा ब्रह्मन् आत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः हिरण्यगर्भः लोकेशः स्वयम्भूः चतुराननः धाता अब्जयोनिः द्रुहिणः विरिञ्चिः कमलासनः स्रष्टा प्रजापतिः वेधाः विश्वसृक् विधिः चेति। एते सर्वे पुंलिङ्गशब्दाः। एतेषु मल्लिनाथः स्रष्टा इति गृहीतवान्।

---

४ त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् (रघुवंशम्, १.७)
५ अमरकोशः, द्वितीयखण्डः, ब्रह्मवर्गः, पर्यायः - ७२
६ तं वेधा विदधे नूनं महाभूतसमाधिना (रघुवंशम्,१.२९)
७ अमरकोशः, प्रथमकाण्डः, पर्यायः - ८

## २. अभिधानरत्नमाला

**गृहम्** [८]– गृहैर्दारैः। जाया च गृहिणी गृहम् इति हलायुधः।

व्याख्याकारेण मल्लिनाथेन गृहम् इति पदस्य अर्थविषये सञ्जीविनीटीकायाम् उक्तं गृहैर्दारैः इति। अर्थात् गृहपदस्यार्थस्तावत् दारः इति। हलायुधकोषे अर्थात् अभिधानरत्नमालायां श्लोकस्तावत्–

दाराः क्षेत्रं कलत्रं च भार्या सहचरी वधूः।
सधर्मचारिणी पत्नी जाया च गृहिणी गृहाः॥ [९] इति।

अर्थात् अभिधानरत्नमालायाम् उल्लिखिताः गृहपदस्य वाचकशब्दाः यथा– दारः कलत्रं भार्या जाया गृहिणी धर्मचारिणी पत्नी सहचरी वधूः चेति। एतेषु अर्थेषु दारः इत्यर्थं गृहीतवान् मल्लिनाथः।

**अन्वये** [१०]– अन्वये वंशे। अन्ववायोऽवयो वंशे गोत्रं चाभिजनं कुलम् इति हलायुधः।

मल्लिनाथेन अन्वयः इति पदस्य अर्थविषये सञ्जीविनीटीकायाम् उक्तम् अन्वये वंशे इति। अर्थात् अन्वयपदस्य अर्थः कृतः वंशः। अस्मिन् विषये स्वमतसमर्थनाय हलायुधेन कृतायाः अभिधानरत्नमालायाः प्रमाणम् उपस्थापितम्। हलायुधकोषे अभिधानरत्नमालायां वा उल्लिखितः श्लोकस्तावत्–

अन्ववायोऽन्वयो वंशो गोत्रं चाभिजनः कुलम्।
चरित्रं चरितं शीलं चारित्रं च समं स्मृतम्॥ [११] इति।

**प्राचीनबर्हिषा** [१२]– प्राचीनबर्हिरिन्द्रः पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिः पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिः स्मृतः इतीन्द्रपर्यायेषु हलायुधाभिधानात्।

व्याख्याकारेण मल्लिनाथेन अत्र प्राचीनबर्हिः इति पदस्य अर्थः कृतः इन्द्रः। विषयेऽस्मिन् स्वमतसमर्थनाय अभिधारत्नमालायाः उद्धरणं दत्तम्। सम्पूर्णश्लोकस्तावत्–

जिष्णुर्वज्रधरः सहस्रनयनो वास्तोष्पतिर्गोपतिः।
पर्जन्यो मघवा हरिहयः प्राचीनबर्हिः स्मृतः॥ [१३] इति।

---

[८] यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् (रघुवंशम्,१.७)
[९] अभिधानरत्नमाला– २.३३९
[१०] तदन्वये शुद्धमति प्रसूतः शुद्धिमत्तरः (रघुवंशम्,१.१२)
[११] अभिधानरत्नमाला– २.२४१
[१२] स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा (रघुवंशम्,४.२८
[१३] अभिधारत्नमाला– १.५२

प्राचीनबर्हिः इति शब्दस्य पर्जन्यः मघवा वृषा सहस्रनयनः चेति समर्थकशब्दाः सन्ति। एतेषु अर्थेषु मल्लिनाथः इन्द्रः इत्यर्थं गृहीतवान्।

### ३. अनेकार्थसंग्रहः

**स्कन्धः** [१४]– चतुःस्कन्धेव चतुर्व्यूहेव। स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु। नृपे समूहे च इति हैमः।

व्याख्याकारेण मल्लिनाथेन स्कन्धः इति पदस्य अर्थः कृतः व्यूहः। अस्मिन् विषये स्वमतसमर्थनाय हेमचन्द्रकृतात् अनेकार्थसंग्रहः इति कोषग्रन्थात् प्रमाणम् उपस्थापितम्। सम्पूर्णश्लोकस्तावत्–

स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु।
नृपे समूहे व्यूहे च सन्धा स्थितिप्रतिज्ञयोः॥ [१५] इति।

**पटलैः** [१६]– पटलैः सञ्चयैरिव। पटलं तिलके नेत्ररोगे छन्दसि सञ्चये। पिटके परिवारे च इति हेमः।

मल्लिनाथेनात्र पटलम् इति पदस्य अर्थः कृतः सञ्चयः। विषयेऽस्मिन् स्वमतसमर्थनाय हेमचन्द्रकृतात् अनेकार्थसंग्रहः इति कोषग्रन्थात् प्रमाणं दत्तम्। सम्पूर्णश्लोकस्तावत्–

पटलं तिलके नेत्ररोगे छदिषि सञ्चये।
पिटके परिवारे च पञ्चाला नीवृदन्तरे॥ [१७] इति।

### ४. वैजयन्ती

**सारसैः** [१८]– सारसैः पक्षिविशेषैः। सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः इति यादवः।

व्याख्याकारेण मल्लिनाथेन अत्र सारसः इति पदस्य पक्षिविशेषः इति अर्थः कृतः। स्वमतसमर्थनाय वेदान्तभाष्यकारस्य रामानुजस्य गुरोः यादवप्रकाशविरचिताद् वैजयन्ती इति कोशग्रन्थात् प्रमाणम् उपस्थापितम्। सम्पूर्णश्लोकस्तावत्–

दार्वाघाटः शतपत्रो लक्ष्मणा सारसप्रिया।
सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः॥ [१९] इति।

---

[१४] ययौ पश्चाद्रथादीति चतुष्कन्धेव सा चमूः (रघुवंशम्,४.३०)
[१५] अनेकार्थरत्नमाला– २.२५६
[१६] तस्तारः सरघाव्याप्तैः स क्षौद्रपटलैरिव (रघुवंशम्,४.६३)
[१७] अनेकार्थरत्नमाला– ३.६९८
[१८] सारसैः कलनिह्लादैः क्वचिदुन्नमितानना (रघुवंशम्,१.४१)
[१९] वैजयन्ती– अन्तरिक्षकाण्डः, स्वर्गाध्यायः, श्लोकसंख्या - ६५

**क्रिया** [२०]– क्रिया शिक्षा। क्रिया तु निष्कृतौ शिक्षा चिकित्सोपायकर्मसु इति यादवः।

मल्लिनाथेन सञ्जीविनीटीकायां क्रिया इति पदस्य शिक्षा इति अर्थः कृतः। वैजयन्त्याः सम्पूर्णश्लोकस्तावत्–

क्रिया तु निष्कृतौ शिक्षाचिकित्सोपायकर्मसु।
करणारम्भपूजासु चेष्टायां सम्प्रधारणे॥ [२१] इति।

**५. शाश्वतकोशोऽनेकार्थसमुच्चयो वा**

**गौरम्** [२२]– गौरः शुभ्रः। चामरीकरं च शुभ्रं च गौरमाहुर्मनीषिणः इति शाश्वतः।

मल्लिनाथेन गौरः इति पदस्य अर्थः कृतः शुभ्रः। अत्र स्वमतसमर्थनाय तेन शाश्वतविरचितः शाश्वतकोशः अनेकार्थसमुच्चयो वेति कोषग्रन्थात् प्रमाणम् उपस्थापितम्। सम्पूर्णश्लोकस्तावत्–

चामरीकरं च शुभ्रं च गौरमाहुर्मनीषिणः।
असञ्जातरजाः कन्या गौरी गौरी च पार्वती॥ [२३] इति।

**केवलम्** [२४]– केवलम् एकम्। केवलः कृत्स्नः एकश्च केवलश्चावधीरिता इति शाश्वतः।

**६. विश्वप्रकाशः**

**वार्द्धके** [२५]– वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि इति विश्वः।
सम्पूर्णश्लोकस्तावत्–

वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि।
मामकं ममतायुक्ते मातुले मामकः स्मृतः॥ [२६] इति।

**शुचिः** [२७]–

शुचिव्यपाये ग्रीष्मावसाने शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते।
ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि इति विश्वः।

मल्लिनाथेन शुचिः इति शब्दस्य अर्थः कृतः ग्रीष्मः। अत्र स्वमतसमर्थनाय महेश्वरविरचितात् विश्वप्रकाशः इति कोशग्रन्थात् उद्धरणम् उपस्थापितम्।

---

[२०] अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति (रघुवंशम्,३.२९)

[२१] वैजयन्ती– द्व्यक्षरकाण्डः, स्त्रीलिङ्गाध्यायः, श्लोकसंख्या - ९

[२२] कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् (रघुवंशम्,२.३५)

[२३] शाश्वतकोशः, श्लोकसंख्या - १३४

[२४] ऋणाभिधानात् स्वयम् एव केवलं तदा पितॄणां मुमुचे स बन्धनात् (रघुवंशम्,३.२०)

[२५] वार्द्धके मुनिवृत्तीनां योगनान्ते तनुत्यजाम् (रघुवंशम्,१.८)

[२६] विश्वप्रकाशः, कान्तवर्गः, कत्रिकम्, श्लोकसंख्या - ७७

[२७] करीव सिक्थं पृषथः पयोमुचा शुचिव्यपाये वनराजिपल्वलम् (रघुवंशम्,३.३)

## ७. उपसंहारः

रघुवंशमहाकाव्ये मल्लिनाथकृतसञ्जीविनीटीकायां शास्त्रीयोद्धरणेषु व्याकरणशास्त्रीयोद्धरणानां प्रयोगाः अधिकाः सन्ति। पदानाम् अर्थस्पष्टीकरणार्थं मल्लिनाथेन कोषग्रन्थानाम् उद्धरणं कृतम्। महाकवेः कालिदासस्य कल्पितार्थस्य स्पष्टीकरणाय प्रयासः कृतः सञ्जीविनीटीकायां मल्लिनाथेन। क्वचित् च पदस्पष्टतायै समानार्थकशब्दस्य प्रयोगः कृतः। अमरकोषः अभिधानरत्नमाला अनेकार्थसंग्रहः वैजयन्ती अनेकार्थसमुच्चयः विश्वप्रकाशः शाश्वतकोशश्चेति कोषग्रन्थेभ्यः समानार्थकपदानाम् उद्धरणं कृतम्। तेषु केषाञ्चन विचारः अत्र कृतः।

✶✶✶

## Bibliography


1. *Amarakośaḥ*; Amarasiṃha; Viśvanātha Jhā (ed.); Motilal Banarasidass; Delhi; 2002
2. *Raghuvaṃśamahākāvyam*; Kālidāsa; Kṛṣṇamaṇi Tripāṭhī (ed.); Chowkhamba Surabharati Prakashan; Benaras; 2016
3. *Vaijayantīkoṣaḥ*; Haragovinda Śāstrī (ed.); Chowkhamba Bharati Academy; Benaras; 2008
4. *A Companion to Sanskrit Literature*; S.C.Banerji (ed.) ; MLBD; Delhi; 1971


✳ ✳ ✳